# कालिदासकाव्ये शब्दपरिपाकः

डॉ० नित्यानन्दः
संस्कृतविभागः,
पी० जी० डी० ए० वी० सान्ध्यमहाविद्यालयः
(दिल्लीविश्वविद्यालयः)
नवदेहली

हेमन्त प्रकाशन
दिल्ली

हेमन्त प्रकाशन
डी-१६, सी० सी० कॉलोनी, दिल्ली-११०००७



प्रथम संस्करण
गान्धी जयन्ती, १६७७ (वि० संवत् २०३४)

मूल्य : रु० ५०.००

वितरक : १ भारतीय विद्या प्रकाशन
१ यू० बी० जवाहरनगर, बंगलो रोड, दिल्ली-११०००७

२ भारतीय बुक कार्पोरेशन
पो० बॉक्स नं० २१४४
१ यू० बी० जवाहरनगर, बंगलो रोड, दिल्ली-११०००७

अमर प्रिंटिंग प्रेस (धाम प्रिंटिंग एजेन्सी),
८/२५, विजयनगर (डबल स्टोरी) दिल्ली-११०००६

# ŚABDAPARIPĀKA
# IN
# KĀLIDĀSA'S POETRY

**Dr. Nityanand**

*Sanskrit Department, P.G.D.A.V. (Evening) College,*
*University of Delhi, New Delhi.*

HEMANT PRAKASHAN
DELHI

दिवङ्गतानां
परमपूज्यानां पितृचरणानां
पण्डितगुरुदत्तशर्मणां
पुण्यस्मृतौ
सप्रणति समर्पणम्

कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये तु मादृशाः ।।
—मल्लिनाथः

महाकविं कालिदासं वन्दे वाग्देवतागुरुम् ।
यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ।।
—हलायुधः

प्रतिपदमखिलार्थव्याकृतौ कः कृती स्यात्
सुमतिभिरनुभाव्ये कालिदासस्य काव्ये ।
प्रभवति परिमातुं को विशेषानशेषान्
वपुषि सुकृतिदृश्ये विश्वरूपस्य विष्णोः ।।
—पूर्णसरस्वती

# पुरोवाक्

कालिदासकाव्यरसिकस्य मम सहकर्मिणः पण्डितस्य डाक्टरनित्यानन्दशर्म-महोदयस्य कालिदासकाव्ये शब्दपरिपाकनामकं ग्रन्थं सानन्दं सावहितेन मनसा पाठं पाठं प्रसीदतितमां मे चेतः। ग्रन्थोऽयं स्फुटं प्रमाणयति संस्कृतकवीनां मुकुटमणिरेव कालिदासस्य। शब्दप्रयोगविषये न खलु कोऽप्यन्यः कविः संस्कृत-साहित्ये स्वाभिप्रायप्रख्यानचातुरीचतुरं कालिदासमतिशेते, इति यस्सत्यं नैकोऽपि कालिदासप्रयुक्तः शब्दः परिवर्तयितुं शक्यते, परिवर्त्येत चेन्न खलु तादृशी कालिदासाभिमताऽर्थाभिव्यक्तिः। कालिदासस्य शब्दपरिपाकः कस्य वा सहृदयस्य न श्लाघ्यः यत्र प्रत्येकं पदमुचितशब्दार्थसन्निवेशजन्यं लालित्यं गुणाभि-सम्बन्धकृतं सौन्दर्यं तत्तद्विशिष्टशब्दार्थाभिव्यञ्जनसामर्थ्यस्वरूपमौचित्यञ्च प्रमाणयति। श्लोकसामान्येन प्रतिभाविशेषेणैव महाकवित्वलाभः सम्पद्यते। तदभावे तु न खलु दशसहस्रैणापि छन्दोबन्धेन। अत एवोक्तं श्रीमदानन्दवर्धना-चार्येण स्वकीये ध्वन्यालोके "येनास्मिन्नतिविचित्रपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवयो गण्यन्ते।" कविकुलगुरोः कालिदासस्य काव्येषु प्रयुक्तानां देवतावर्गीयाणां प्रकृतिवर्गीयाणां मनुष्य-वर्गीयाणाञ्च शब्दानाममरमेदिनीहलायुधप्रभृतिकोषबलेन व्याकरणप्रमाणेन च शब्दपरिपाकधिया श्रीमता नित्यानन्दशर्मणा ग्रन्थेऽस्मिन् यथा पाण्डित्यपूर्णं विश्लेषणं कृतं, न खलु तथा कुत्राप्यन्यत्र नयनपथमावहतीति दिष्ट्या हृदयेन वर्धाप्यते सुहृद्वरो डाक्टरनित्यानन्दशर्ममहोदयः। नैतावदेवापि तु निपातप्रयोगौ-चित्यं, लिङ्गवचनदीर्घसमासप्रयोगौचित्यं, शब्दनियोजनौचित्यं, वाक्यारम्भे क्रियापदौचित्यं क्रियाविशेषणौचित्यं सर्वनामौचित्यञ्चाथ च रूढार्थप्रचलित-शब्दानां यौगिकार्थे प्रयोगाः इत्येतदखिलं सोदाहरणं सप्रमाणञ्चोपन्य-स्तम्। ग्रन्थोऽयं कालिदासस्य हृदयं यथार्थमवबोद्धुं कालिदासरसिकानां साहाय्य-माचरिष्यन् साहित्यमर्मज्ञानां सहृदयानाञ्च हृदयान्यावर्जयिष्यतीति श्रीनित्यानन्द-शर्ममहोदयस्य सर्वतः कामये मङ्गलम्।

दिल्ली
२.१०.१९७७

रसिकविहारी जोशी
आचार्यः संस्कृतविभागाध्यक्षश्च
दिल्लीविश्वविद्यालयः, दिल्ली

# विनयवाक्

बाल्यकालादेव कालिदासकाव्येषु ममाभिनिवेशो वर्तते। राजस्थानस्यै- कस्मिन् ब्रह्मचर्याश्रमे दशवर्षदेशीयोऽहं यदैकस्मिन्नुत्सवे रघुवंशस्याजविलाप- मभिनीतवान् ततः प्रभृत्येव कालिदासस्य शब्दनिचयो ममाङ्गानीवाभूव। कालान्तरेण चाभिज्ञानशाकुन्तलस्याभिनयावसरं प्राप्य कालिदासभारतीमह- मात्मनि मूर्त्तरूपेणान्वभवम्। एम० ए० परीक्षामुत्तीर्य यदाऽहं कालिदासकाव्य- मधिकृत्यानुसन्धानाभिलाषं गुरुवर्येभ्यस्तदानीन्तनसंस्कृतविभागाध्यक्षेभ्यो डा० नरेन्द्रनाथचौधरीमहाभागेभ्यः प्राकटयं तदा तैरनुमोदितेऽपि ममाभिलाषे कालिदासमधिकृत्य तु प्रायेण विवेचनीयं पूर्वमेव विवेचितमिति विचार्य विषयान्तरं निर्दिष्टम्। किन्तु मम मनसि सदाप्ययं संशयोऽभूत् यत् किं वस्तुतः कालिदासविषयक न किञ्चिदनुसन्धानापेक्षमवशिष्यते। कालो यातः। अभिज्ञान- शाकुन्तलं मेघदूतञ्च पठतः पाठयतो ममाक्ष्णोः पुरतो विद्यमानैः कालिदास- शब्दैरहं प्रतिक्षणमाकृष्टः। 'जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिमि'त्यत्र दयिताजीवितालम्बनार्थिनो यक्षस्य स्वकुशलमय्याः प्रवृत्तेर्जीवित जलं जीवनं वा मूत यद्यमनेनैतादृशेन जीमूतेनैव स्वप्रिया प्रति प्रेषणे कालिदासपर्यायेषु मेघस्य जीमूतपदोपन्यास एव कीदृक् सौन्दर्यमौचित्यञ्चावहति। तथैव 'मन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वामि'त्यत्र मेघपर्यायेषु घन एव सान्द्रत्वान्निबिडत्वा- दन्तःसारो भवतीत्यत्र घनपदमेव युक्तियुक्तमित्येतादृशानन्यानपि बहून् प्रयोगान् दृष्ट्वैकस्मिन् दिवसे मान्यानां डा० सत्यव्रतशास्त्रिमहाभागानां समक्षमेतद्विषयिकी चर्चामकुर्वम्। प्रयमेव कालिदासस्य शब्दपरिपाक इत्युक्त्वा ते महाभागाः 'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्। त शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते' इति काव्यालङ्कारसूत्रवृत्तौ वामनो- द्धृत पद्यमुच्चार्य मन्ये मह्य बीजमन्त्रमेव प्रायच्छन्। नायं विषयोऽ- द्यावधि केनापि शोधरूपेण गृहीतस्त्वमेव तर्हि 'कालिदासकाव्ये शब्दपरिपाक' इति विषयमवलम्ब्य कार्यमारभस्वेति तैरादिष्टस्तेषामेव सुचारुनिर्देशने कार्य- मिदमारब्धवान्। सम्प्रति कालिदासीयशब्दाना परिपाकनिकषे कषणस्यातीव महत्त्वपूर्णं कार्यं ममायेऽवियत। ये यत्रभिधानकोशेषु समानार्थका इति परि- पठिताशब्दास्ते नावश्य समानार्थका भवितुमर्हन्ति, भिद्यते हि तेषामर्थः क्वापि

कलयेति । यथेक्षुक्षीरगुडादीनां माधुर्यं सान्तरं सदपि न तथा विभाव्यते न वा वाचा प्रणिगद्यते भेदस्यातिसौक्ष्म्यात् तथा समानार्थकानामप्यवान्तरो विशेषो भवति, न च लक्ष्यते सौक्ष्म्याद् इति पण्डितवर्यैश्चारुदेवशास्त्रिभिर्यथालिखितम् 'पर्यायवचनविवेक' इत्यस्मिन् शोधनिबन्धे तदनुसारं कालिदासः शब्दानामिमभवान्तरविशेषं सविशेषमजानादिति तेन प्रयुक्तानां शब्दानां तथैव दृष्ट्या विश्लेषणं मया करणीयमिति सङ्कल्पः प्रादुरासीद् मे मनसि । गुरुतरकार्यमिदम् परं डा० सत्यव्रतशास्त्रिमहाभागानां यथावसरं यथेष्टमार्गसन्दर्शनेन पूर्तिमायादित्यत्र विषये तेषां मयि महानाभारः । शब्दानां विश्लेषणं विभिन्नकोशप्रतिपादितानर्थान् टीकाकृतामर्थान् चोपलक्ष्यैव मया कृतम् । शब्दानां व्याकरणव्युत्पत्तिसाध्या अर्था यदि प्रायेण मया गृहीतास्तत्र न ममैवाग्रहः । कविना स्वयं शब्दानां धातुपरकं निर्वचनं बहुशः कृतं यथा— 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्'; 'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा । तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्'; 'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम'; 'क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः'; 'इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणाद्' इत्यादिषु । कालिदासस्य निपातप्रयोगे, लिङ्गवचनसमासप्रयोगे, इष्टप्रभावोत्पादनार्थं व्याकरणप्रतिबद्धतायाः परित्यागे, वाक्ये शब्दानामानुपूर्वीविधाने गवेषणीयमस्य विद्यत इति मम विषयान्तर्गतमिदं सर्वमिति विचार्य षट्सु परिच्छेदेषु विभज्य विषयोऽयं मयोपस्थापितः । सौकर्यहेतोः कालिदासीयपद्यानां क्रमसंख्या सीतारामचतुर्वेदिसम्पादितकालिदासग्रन्थावलीतः दत्ता । पाठभेदप्रश्ने तु प्रचलिताः प्रायेण विद्वद्भिः स्वीकृताः पाठा एव नः शरणम् ।

अन्ते चाहं समेषां विद्वद्वर्याणां सुहृद्वर्याणाञ्च कृते स्वकृतज्ञतां प्रकटयामि यैः समये समये सम्मतिदानेनाहमुपकृतो विशेषतश्च पण्डितप्रवराणां व्याकरणमहोदधीनां मान्यानां चारुदेवशास्त्रिणां यैर्जटिलेषु तेषु तेषु स्थलेषु मम बह्व्यः शङ्का निराकृताः । मम निर्देशकानामाचार्यवराणां डा० सत्यव्रतशास्त्रिमहाभागानां कृते ममाभारप्रदर्शनं त्वौपचारिकमेव स्यात् यतस्तेषां सततप्रोत्साहनेन मार्गसन्दर्शनेन च किमपि कर्तुमलमहमतस्ते मम श्रद्धाभाजः । दिल्लीविश्वविद्यालये संस्कृतविभागाध्यक्षाणामखिलशास्त्रपारङ्गतानां विद्वद्वरेण्यानां डा० रसिकविहारीजोशिमहाभागानामाधमर्ण्यं त्वहं विनयावनतेन शिरसा सततं वहामि यैरनुजनिर्विशेषमहं प्रबन्धस्यास्य प्रकाशनाय प्रोत्साहितस्तथा चात्र पुरोवाग्लेखनेनात्यधिकमनुगृहीतः । तान् प्रति बहुधन्यवादपुरस्सरो कृतज्ञ-

तामुद्घाटयामि । शिवाजीमहाविद्यालये आचार्यपदमलङ्कुर्वाणस्य ममाभिन्नमित्रस्य डा० सूर्यसिंहराणामहोदयस्य मयि महान् भ्रातृस्नेहस्तेन हि सर्वास्वेवावस्थासु सत्परामर्शदानेनाहमनुकम्पितः । कैः शब्दैस्तं महानुभावं प्रति स्वकीयां कृतज्ञतां स्थापयेयमिति न ज्ञायते । ममानुजसन्निभस्याल्पे वयस्यकालकालकवलितस्य दिवङ्गतस्य डा० प्रह्लादकुमारस्य स्मरणं यदायाति तदैवाश्रुविलम्लाननो भवामि । प्रबन्धलेखनावसरे बहुविधं साहाय्यं मे कृतवानयं पुण्यात्मा । सम्प्रति परमात्मलीनं तं प्रति श्रद्धासुमनोऽञ्जलिसमर्पणमन्तरा किं मतु पार्यते ।

महदायाससाध्ये मुद्रणकार्ये मुद्रणालयाध्यक्षः श्रीशामलालमहोदयो मम बहुधन्यवादार्हो यस्यानवरतप्रयासेन मनःकामनया चास्य ग्रन्थस्य शोभनं मुद्रणं सम्पन्नम् । तथापि स्खलनं नाम मानवप्रकृतिरित्यवधार्यास्मिन् ग्रन्थे या कापि त्रुटिः स्यात्तां संमृश्यानुगृह्णीयुर्वाग्मिवरा इति सप्रश्रयं विनिवेदयति—

पी० जी० डी० ए० वी० सान्ध्यमहाविद्यालयः
(दिल्लीविश्वविद्यालयः)
नवदेहली ।
गान्धीजयन्ती, १९७७

विदुषां वशंवदः
नित्यानन्दः

# संक्षेपसूची

| | |
|---|---|
| रा० | रामायणम् |
| महा० | महाभारतम् |
| रघु० | रघुवंशम् |
| कुमार० | कुमारसम्भवम् |
| मेघ० | मेघदूतम् |
| ऋतु० | ऋतुसंहारम् |
| शाकु० | अभिज्ञानशाकुन्तलम् |
| विक्रमो० | विक्रमोर्वशीयम् |
| माल० | मालविकाग्निमित्रम् |
| शिशु० | शिशुपालवधम् |
| नैषध० | नैषधीयचरितम् |
| श०क०द्रु० | शब्दकल्पद्रुमः |
| पा० | पाणिनिः (अष्टाध्यायी) |
| अमर० | अमरकोशः |
| मेदिनी० | मेदिनीकोशः |
| विश्व० | विश्वकोशः |
| त्रिकाण्ड० | त्रिकाण्डशेषः |
| हलायुध० | हलायुधकोशः |
| अनेकार्थ० | अनेकार्थसंग्रहः |
| मो० वि० को | मोनियरविलियमकोशः |
| दे० भा० पु० | देवीभागवतपुराणम् |
| भ० गीता | श्रीमद्भगवद्गीता |
| भागवत० | भागवतपुराणम् |

# विषयानुक्रमणिका

# प्रथमः परिच्छेदः

## (क) शब्दपरिपाकस्य परिभाषा

'परिपाक' शब्दोऽयं नितान्तं महत्त्वपूर्णो व्याख्यामापेक्षोऽपि न कविसम्प्रदायप्रसिद्धेऽर्थे व्याख्यात इति विचित्रमिव प्रतिभाति । अमरहलायुधमेदिनीप्रभृतिकोशा अस्य शब्दस्य विषये मौनमेवास्थिताः । यद्यपि श्रीवामनशिवराम आप्टेमहाभागः श्रीतारानाथभट्टाचार्यश्च स्वसम्पादितयोः कोशयोः शब्दमिमं स्पृशतो नूनं परं तेन न बहु स्पष्टं भवति । श्रीमता आप्टेमहाभागेन "परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलिता"[1] "प्रपन्नानां मूर्तः सुकृतपरिपाको जनिमताम्"[2] "वीक्ष्य तस्य विनये परिपाकं पाकशासनपदं स्पृशतोऽपि"[3] इत्येभिस्त्रिभिरुदाहरणैरस्य शब्दस्य क्रमशः पूर्णविकासः, परिणामः नैपुण्यञ्चेत्यर्थाः प्रकाशिताः । श्रीतारानाथभट्टाचार्यमहोदयश्च शब्दस्तोममहानिधिरिति कोशे नैपुण्यमुत्तमपाकश्चेत्यर्थौ प्रादात् ।

पाकशब्दस्य व्युत्पत्तिस्तु प्रायशः सर्वैरेव कोशकारैः कृता पच्धातोर्भावे घञि पाक इति । अस्मिन् सन्दर्भे पाकराजेश्वरेण सप्तप्रकारकाः पाका निर्दिष्टाः यथा—

भर्जनं तलनं स्वेदः पचनं क्वथनं तथा ।
ताण्डूरं पुटपाकश्च पाकः सप्तविधो मतः ॥[4]

परमेतान् पाकानतिरिच्य सर्वथाऽनिर्वचनीयोऽप्येकः पाको भवति शब्दपाक इत्यस्मिन् पक्षे काव्यालोचकान् विहाय कोऽन्यो विचारयितुं प्रभवेत् । यद्यपि श्रोत्रग्राह्यगुणपदार्थविशेषः शब्दः, परम्—"एकः शब्दः सम्यगधीतः सम्प्रयुक्तः स्वर्गे लोके च कामधुग्भवती"ति श्रुतिवचने शब्दपदस्य यो महिमा निहितः स एव शब्दपाकपदे विद्यते । कः शब्दः कस्मिन् प्रसङ्गे कस्मिन् स्थले स्वशक्तेः पूर्णपरिचायकोऽस्ति, अपि च कस्यचिद् शब्दविशेषस्य प्रयोगेण सौन्दर्याधिक्यं

---

१. शिशु० ४।४८
२. भाम० ४।३१
३. नैषध० ५।२०
४. पा० क० द्रु० तृतीयः काण्डः, पृ० ८८

भवति तदभावे चाभीष्टार्थसिद्धिव्याघात इति सम्यग्ज्ञानमेव शब्दपाकः शब्दपरिपाको वा कथ्यते। शब्दस्य परि सर्वतोभावेन पाक एव शब्दपरिपाकः। नास्त्यत्र सन्देहावसरो यच्छब्दार्थौ काव्यस्यात्मा। प्रायः सर्व एवाचार्यवराः काव्यलक्षणं प्रतिपादयन्तः शब्दार्थयोः प्राधान्यं स्वीकुर्वन्ति। यथा—

शब्दार्थौ काव्यम्— काव्यालङ्कारः

इष्टार्थव्यवच्छिन्ना पदावलिः काव्यम्—काव्यादर्शः

तददोषौ शब्दार्थौ— काव्यप्रकाशः

रमणीयार्थप्रतिपादकः शब्दः काव्यम्—रसगङ्गाधरः

शब्दस्तु साक्षाद् ब्रह्म एव। काव्यादर्शकृताऽप्युक्तम्—

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥[१]

अतः कवेः शब्दस्योपरि पूर्णाधिकारेण भवितव्यम्। तदर्थं शब्दशास्त्रस्य पूर्णपाण्डित्यं निर्विवादमपेक्षते। इदं पाण्डित्यमपि शब्दस्य सम्यक् प्रयोगाभावे व्यर्थमेव। कश्चिच्छब्दः प्रयोज्योऽप्रयोज्यो वा इति संशयो यावदस्ति तावन्न शब्दपरिपाकः। सम्यक् प्रयुक्तः शब्दो यदा परिवर्तनसहत्वं त्यजति, यदि तत् स्थाने नान्यः शब्दः प्रयोक्तुं शक्यते, स एव कवेः शब्दपाकः शब्दपरिपाको वा।

शब्दपाकस्यायमेवार्थः काव्यालङ्कारसूत्रकारेण आचार्यवरेण वामनेन 'पदाधानोद्धरणमवेक्षणम्' इति सूत्रवृत्तौ कृतः—"पदस्याधानं न्यासः, उद्धरणमपसारणम्। तयोः खल्ववेक्षणम्। अत्रेमौ श्लोकौ भवतः—

आधानोद्धरणं तावद् यावद्दोलायते मनः।
पदस्य स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती॥
यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते॥[२]

अयं शब्दपाकश्च काव्यमीमांसाकृता राजशेखरेण काव्यपाकविवेचने सविस्तरं व्याख्यातः। सततमभ्यासवशतः सुकवेर्वाक्यं पाकमायाति। 'कः पुनरयं पाकः' इत्याचार्याः। 'परिणाम' इति मङ्गलः। 'कः पुनरयं परिणामः' इत्या-

---

१. काव्यादर्शः १।४

२. काव्यालङ्कारसूत्रवृत्तिः १।३।१५

चार्याः । 'सुपां तिङां च यः श्रवो या व्युत्पत्तिः' इति मङ्गलः । सौशब्द्यमेतत् । 'पदनिवेशनिष्कम्पता पाकः' इत्याचार्याः । तदाहुः—

आवापोद्धरणे तावद्यावद्दोलायते मनः ।
पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥

आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाक इति वामनीयाः । तदाहुः—

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यायनिष्णाताः शब्दपाकं प्रचक्षते ॥[1]

अस्तु, उपर्युक्तस्य सर्वस्य निष्कर्षोऽयं यत्कविना यत्र यत्पदं निहितं तत्स्थाने नान्यः शब्दः प्रयोज्यविषयो यदा भवति कवेस्तामवस्थां शब्दपाकं शब्दविदो विदुरिति । आचार्यवामनो न येन केनैव प्रतिपादितं सिद्धान्तं व्याकरोत् यावत्तस्य दृढनिश्चयो नाभूत् यदियमुक्तिस्तेषामस्ति ये वस्तुतः शब्दविन्यासे निष्णाताः सन्ति ।

एवमेव शब्दपरिपाकः प्रकारान्तरेण अन्यैरपि काव्यालोचकैः प्रसङ्गानुसारं वर्णितः । यथा हि आचार्यक्षेमेन्द्रः औचित्यविचारचर्चायां पदौचित्यसाधने इममेव भावं प्रकाशयत्यनेन पद्येन—

तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम् ।
चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम् ॥[2]

आचार्यवर्य आनन्दवर्धनोऽपि अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्यप्रभेदे पदप्रकाशतां[3] सम्पादयन् शब्दपाकमेव पुष्णाति, उदाहरति च—'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्' इति । अत्र सम्पूर्वात् नह् धातोः कर्तरि क्ते निष्पन्नोऽयं शब्दः कवचादिना सन्नद्धत्वं यथा संनियम्येति मुख्यार्थं परित्यज्य उद्यतत्वमापादयन् विरहिणां कृते मेघस्याधिककष्टदायकत्वं ध्वनयति । आचार्येण तु इदमप्युक्तं यद्—'यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवे'-रिति ।

पाश्चात्यकलासन्दर्भे पाश्चात्यसमीक्षकैरपीदमौचित्यतत्त्वं सम्यगालोचितम् । सर्वप्रथम तावद् अरस्तूमहाभागः भाषणशास्त्रप्रसङ्गे औचित्यतत्त्वं विशदं व्याख्याति । स इदं प्रेपॉन इति नाम्ना व्यवहरति । अरस्तुशिष्यः थियोफ्रेस्टस्तु

---

१. काव्यमीमांसा, पञ्चमोऽध्यायः ।

२. कारिका ११

३. ध्वन्यालोकः ३।१ (वृत्तिः)

प्रौचित्यं शैल्याः गुणं मन्यते । डायोनीसियसश्च एतावदाह—लेखस्य यस्मिन्नङ्गे प्रौचित्यं नास्ति तद्यदि पूर्णतया न व्यर्थं तस्य महत्त्वपूर्णोऽशस्तु व्यर्थः स्यादेव । सिसरोमहोदयश्चेदं डॆकोरमित्यभिधत्ते । होरेसक्विन्तीलियौ चेममौचित्यसिद्धान्तं प्राबल्येन साधितवन्तौ । प्राङ्गलीयौ पुटेनहं सिडनी जौन्सनमहोदयौ चेमं सिद्धान्तं प्रसारयामासतु । ड्राइडन्महाभागश्च विचाराणां शब्दानाञ्चौचित्यमेव लेखनकलेति मनुते । तृतीयशताब्दीय प्रालोचकः लौजिनसमहोदयः स्वकीये 'प्रान दि सब्लाइम' इति ग्रन्थे प्रलङ्कारौचित्यं शब्दौचित्यञ्चेत्यौचित्यद्वयमुल्लिलेख । तन्मते काव्यकलायां शब्दस्य विद्यते महान् महिमा । उचितानां शोभनानाञ्च पदानां प्रयोगेण श्रोतृणां हृदि प्राकर्षणमाश्वासनञ्चोत्पद्यते ।[1] प्रस्ति तेषु जीवनी शक्तिः । तद्विना च काव्यं मृतकवल्लक्ष्यते । किन्नाम शब्दौचित्यमिति प्रश्ने विषयानुकूलशब्दप्रयोग एव शब्दौचित्यमिति तेन व्याख्यातम् । प्रष्टाविंशतिशताब्दीयः पोपमहांश्च प्रौचित्यतत्त्वं भृशं पुपोष । स च ऐसे प्रान क्रिटिसिज्म' इत्याख्ये ग्रन्थे भावानुकूलवर्णानां प्रयोगस्य महत्त्वमदर्शयत् ।[2] तन्मते वर्णनार्थस्य प्रतिध्वनिना भवितव्यम् । शीतलमन्दसमीरस्य सरणौ शब्दा अपि सरसा मन्दगत्या वहन्तः स्युः । यथा—मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्[3] इति । दावाग्निवर्णने च—

> तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
> बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।[4]

1. 'It is probably superfluous to explain to those who already know it how wonderfully the choice of appropriate and highsounding words moves and enchants an audience,...for words finally used are in truth the very light of thought.'

—'On the Sublime'—Ch. 30.

2. 'The sound must seem an echo to the sense.
Soft is the strain when zephyr gently blows,
And the smooth stream in smoother numbers flows;
But when loud surges lash the sounding shore,
The hoarse, rough verse should like the torrent roar;
When Ajax strives some rock's vast weight to throw,
The line to labours, and the words more slow.'

—Essay on Criticism, Lines 365-371.

३. मेघ० १।१०

४. तत्रैव १।५७

इतिवत् शब्दा ओजस्विनः कठोराः सुश्लिष्टाश्च स्युः।

एवमस्मद्देशीयैः पाश्चात्यैश्च काव्यशास्त्रसमीक्षकैः शब्दपरिपाकस्य गौरवं समुद्घोषितम् ।

यस्मिन् काव्ये चायं शब्दपरिपाको विद्यते तत्र सिद्धा सरस्वतीति निश्चितम् । भवन्त्यल्पा एव ते वाग्देवीप्रसादप्रसादिताः कविवरा येषां काव्ये शब्दपरिपाकः प्राप्यते । एषु विलक्षणप्रतिभाशालिषु कविषु मूर्धन्यः कविरस्ति कालिदासो यस्य काव्येषु पदे पदे परिपाकः परिलक्ष्यते । अस्यैव महाकवेः शब्दसागरं तितीर्षोर्मे कविवचोऽनुसृत्य प्रांशुलभ्ये फले लोभ इवास्ति ।

## (ख) कालिदासस्य व्यक्तित्वं कृतित्वं च

प्राचां संस्कृतकाव्यकृतामितिवृत्तमति तमसावच्छिन्नं वर्तते । तत्रापि कालिदासस्यशानां प्रथपनिबद्धाननानां लोकप्रियत्वाल्लोकैः प्रचारितप्रचुरदन्तकथानां सहृदयैराकलितविविधकिंवदन्तीनां समर्पणभावनया वा स्वकाव्यप्रख्यापनाशंसया वा कवीतरैरात्तसमानाभिधानानां कवीनां जीवनं तु भूमौ गह्वरायितमित्यहो कष्टं त्वेषां व्यक्तित्वकृतित्वावधारणम् । तदेवं भूयांसि काव्यानि कालिदासनाम्ना प्रथितानि नयनपथं समायान्ति । किन्तु नैतानि सर्वाण्यस्मदभीष्टकवेः रघुकारस्य हृत्प्रसूतानीति सहृदयहृदयं समालोचकानां सूक्ष्मेक्षिका चास्त्यत्र प्रबलं प्रमाणम् । कालिदासत्रयी तु कविवरो राजशेखरोऽपि परिचिचाय ।[1] काचन किंवदन्ती कविवरं युवावस्थायां स्वाश्रितामेव शाखां छिन्दन्तं मूढराजमिति निदर्शयति । पश्चाच्च कालीदेव्याः प्रसादेन कवित्वलाभं वर्णयति । एका किंवदन्ती तं विषयलम्पटं प्रख्याप्य वेश्यया मारयति चेत्तर्हि अन्या समग्रशास्त्रपारङ्गतं प्रतिभाऽप्रतिमं ब्राह्मणानामादर्शभूतं वर्णयति । यदि कश्चिदस्मत्कविं ख्रीस्ताब्दात्पूर्वं ५१तमे वर्षे मालवाधिपस्य शकारेर्विक्रमादित्यस्य नवरत्नेष्वन्यतमं

---

१. एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥

(सूक्तिमुक्तावलिः)

रत्न प्रतिपादयति[1] तदपरा त ख्रीस्तात्परम् एकादश्या शताब्द्या धारा-नरेशस्य भोजस्य राजसभाया निवेशयति, राजकवित्वञ्च तयोद्घोषयति ।[2]

एवं सत्तु यद्यपि कालिदासस्य व्यक्तित्व कृतित्वञ्चोपलक्ष्य इदमित्यन्तया न किमपि निर्णेतु सुशक तथाप्यन्तर्वाह्यप्रमाणान्यनुरुध्य विषयेऽत्र प्राच्यविद्या-विशारदैरात्ताना तथ्याना समासेन समालोचनमङ्गीक्रियते प्रसङ्गवशात् ।

आदौ तावत् कालिदासस्य कालविषये प्रस्तूयते विचार. । अत्र भूयसा विप्रतिपद्यन्ते कालनिर्णेतारो विद्वासः। तथापि तदीयकालनिर्णयप्रसङ्गेऽधोलिखि-तानि तथ्यान्यवधानमपेक्षन्ते—

(१) जनश्रुतिप्रमाणेन कालिदासस्य येनापि राज्ञा विक्रमादित्येन सह सम्बन्धः ।

(२) बाणभट्टस्य कृतौ हर्षचरिते[3] दक्षिणभूपतेः पुलिकेशिद्वितीयस्य सभा-पण्डितेन रविकीर्तिना निबद्धे शिलालेखे[4] च कालिदासनामोल्लेखः । उभौ चेमौ कविवरौ ख्रीस्तसप्तमशताब्द्याः पूर्वार्धे बभूवतुरितीतिवृत्तविद्भिस्सम्यक् साधि-तम् । अतोऽयं कालः कालिदासस्यावरसीमानमभिव्यनक्ति । नातः परं तस्य सद्भावः कथमप्यनुमोदितु पार्यते ।

(३) कालिदासकृतेः मालविकाग्निमित्रनाटकस्य नेता मगधाधिपस्य पुष्य-मित्रस्यात्मजोऽग्निमित्रो विद्यते । अस्य च कालः इतिहासकारैः ख्रीस्तात् पूर्वं १५०तमे वर्षे निर्धारितः । इयञ्च चरमसीमाऽङ्गीकरणीया कालि-दासस्य । अतः सीम्नोरनयोरन्तराल एव कालिदासस्य कालो निर्णेतुमलम् ।

तत्र जेम्सफर्गूसनमहोदयमतं[5] संस्कृतसाहित्यपुनरुज्जीवनविषयकं

---

१. (क) धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः ।
 ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव-
 विक्रमस्य ॥
 (ज्योतिर्विदाभरणम्)
(ख) ख्याति कामपि कालिदासकवयो नीताः शकारातिना ।

२. भोजप्रबन्धः ।

३. निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
 प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

४. येनाऽयोजि नवेऽश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
 स विजयता रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥

5. *Journal of the Royal Asiatic Society* 1870, p. 81.

मैक्समूलरमहोदयमत[1] गुप्तवंश्यस्य राज्ञः स्कन्धगुप्तस्य समसामयिकत्वमत-ञ्चे[2]ति सर्वाणि मतानि विपश्चिद्भिस्सर्वथा प्रत्याख्यातानीति तेषां विवेचन-मनावश्यकमेव। सम्प्रति मतद्वयमेव विचारपद्धतिमारोढुमर्हति—कालिदासस्य ख्रीस्तचतुर्थपञ्चमशताब्द्यां चन्द्रगुप्तद्वितीयस्य विक्रमादित्यविरुदभाजो नृपस्य आश्रयित्वम्,ख्रीस्तात् पूर्वं प्रथमशताब्द्यां कस्यापि उज्जयिनीनाथकस्य शकारेर्विक्रमादित्यस्याश्रयित्वञ्चेति।

मैक्डोनल[3]—कीथ[4]—भण्डारकर[5]—मिराशीमहोदयाः[6] कालिदासस्य गुप्तसम्राजो द्वितीयचन्द्रगुप्तविक्रमादित्याश्रयित्वमूरीकुर्वाणाः प्रतिपादयन्ति यद् बहुत्र कालिदासो बौद्धकवेरश्वघोषस्याधमर्णः प्रतीयते। अश्वघोषकाव्याद् भावमादायासौ स्वकाव्यकलां ततोऽपि परिमार्जिततरां विकसिततराञ्चकार। कालिदासप्रयुक्ता प्राकृतभाषाऽश्वघोषप्रयुक्तप्राकृतादर्वाचीना वर्तते। कालि-दासकाव्येषु बहुत्र गुप्तान्वयं प्रति सङ्केताः प्रतीयन्ते। कुमारगुप्तजन्मो-त्सवप्रसङ्ग एव कविना कुमारसम्भवमिति काव्यं नृपायोपायनीकृतं स्यात्। रघुवंशे चतुर्थे सर्गे विहितं रघोर्दिग्विजयवर्णनं समुद्रगुप्तस्य चन्द्रगुप्तद्वितीयस्य च विजययात्राभिलंब्धप्रेरणं प्रतिभाति। अत्रैव च रघुवंशे तृतीये सर्गे वर्णितो दिलीपस्याश्वमेधश्चन्द्रगुप्तद्वितीयस्याश्वमेधमिङ्गयति। तेनैव च विक्रमादित्य-विरुदधारणावसरे कालिदासस्य 'विक्रमोर्वशीयम्' इति नाटकमभिनीतं भवेत्। मेघदूतीये चतुर्दशतमे पद्ये कालिदासेन स्वसुहृदो निचुलस्य स्वप्रतिस्पर्द्धिनो बौद्धदार्शनिकस्य दिङ्नागस्य चोल्लेखो विहितः। मल्लिनाथोऽपि श्लोकमिमं तथैव व्याचष्टे। अयञ्च दिङ्नागः ख्रीस्ते ३४५ तः ४२५ तमे[7] वर्षे बभूवेति

1. *History of Sanskrit Literature* (A. Macdonell), 3rd Ed., p. 323.
2. *Introduction to Meghadūta*—K.B. Pathak.
3. *History of Sanskrit Literature* (A. Macdonell), 3rd Ed., p. 321
4. *A History of Sanskrit Literature* (Hindi translation, Dr. Mangal Dev Shastri), p. 88.
5. *Journal of the Bombay Branch of the Asiatic Society*, p. 398.
६. कालिदास (मिराशी), पृ० ४३
7. *History of Indian Logic* (Dr. Satish Chandra Vidyabhooshan), pp. 272-74.

कालिदासोऽपि तस्मिन्नेव समये स्यात् । मिराशीमहोदयस्तु[१] 'त्वयि विनिहित-भारः कुन्तलानामधीशः' इति भोजराजकृते शृङ्गारप्रकाशस्याष्टमे प्रकाशे कालिदासनाम्ना उद्धृतमिदं पद्यमाधृत्य कुन्तलदेशीयराष्ट्रकूटराज्यवर्णने सह कालिदासस्य सम्बन्धं तस्य विक्रमादित्यविरुदभाजश्चन्द्रगुप्तद्वितीयस्याश्रयित्वं तेन 'सेतुबन्धम्' इति प्राकृतकाव्यसर्जनं 'कुन्तलेश्वरदौत्यम्' इति काव्यप्रणयनञ्चोपपादयति । एवञ्चासौ कालिदासं ख्रिस्तीयचतुर्थशताब्द्याश्चरमे पादे पञ्चशताब्द्याश्च प्रथमे पादे उररीकरोति ।

अथ चतुर्थपञ्चमशताब्दराद्धान्तः कामं प्रबलः प्रतीयेत परं सम्यत्र काश्चन विदुषां विप्रतिपत्तयः । भावसाम्यशैलीसाम्यमाधारीकृत्य अश्वघोषकालिदासयोः पूर्वापरभावनिर्णयो नूनं न कमपि निश्चितं परिणामं प्रति नेतुमलम् ।

अस्मन्मते तु अश्वघोष एव कालिदासात् प्रेरणां सम्प्राप्य काव्यमाध्यमेन बौद्धाचारान् संस्कृतानुरागिषु प्रचारयितुं सम्प्रवृत्तः । नातः पूर्वं किमपि बौद्धवाङ्मयं संस्कृतभाषानिबद्धं दृश्यते । कालिदासकाव्यमधिकं परिष्कृतं परिमार्जितञ्चेत्यस्ति परवर्तीति नास्ति कश्चन सद्धेतुः । समानकालिकयोस्समानभावशैल्यादिकमाश्रित्य प्रवृत्तयोः काव्ययोः काव्येष्वपि भवति हि महदन्तरं रुचिसन्निवेशवशाद् वा व्युत्पत्तितारतम्यवशाद् वा प्रतिभाभेदवशाद् वा । नैतेन पूर्वापरविनिर्णयः कर्तुं पार्यते । कीथप्रतिपादितः प्राकृतभाषाधारोऽपि निर्मूलः । वस्तुतस्तूभयोः प्राकृतं जनसामान्यप्रयुज्यमानं भाषिकं प्राकृतं नास्ति प्रत्युत व्याकरणनियमैः परिवर्तितं संस्कृतमेव विद्यते । अपि च बौद्धधर्मावलम्बित्वात् अश्वघोषप्रयुक्ते प्राकृते पालिभाषायाः प्रभावः स्वाभाविक एव । किञ्च, भारते बौद्धप्रभावे क्षीणे अश्वघोषीयनाटकाभिनयस्य तु कथैव का, तत्तु अध्ययनाध्यापनक्षेत्रादपि बहिष्कृतमभूत् । परिणामतश्च तदीयप्राकृते किमपि परिवर्तनमशक्यमजायत । एतद्विपरीतं कालिदासीयनाटकानि निरन्तरमभिनीयन्ते स्म । काले काले दर्शकानां सुगम्यत्वधिया तेषु परिवर्तनमप्यापद्यते स्म । गुप्तान्वयं प्रति सङ्केतविषयकानि प्रमाणानि सर्वथा कल्पनामात्राणि प्रतीयन्ते । मल्लिनाथस्योद्भावनाऽपि भ्रममूला । दक्षिणभारते काञ्चीपु निवसतो दार्शनिकस्य दिङ्नागस्य मध्यदेशवासिना कविना कालिदासेन कीदृशी प्रतिस्पर्द्धा । एवमेव सेतुबन्धकुन्तलेश्वरदौत्यकाव्ययोः प्रणेता कालिदासोऽपि अस्मदभीष्टकविपुङ्गवादन्य एव कश्चिद् भवेदिति अग्रिमसमालोचनया स्पष्टं प्रतिभाति ।

---

१. तृतीयशारदीयज्ञानमहोत्सवः, अखिलभारतीयसंस्कृतविद्यापीठम्
*The Rastrakūtas of Kuntal and the Date of Kalidasa*, V.V. Mirashi.

कालिदासः ख्रीस्तात्पूर्वं प्रथमशताब्द्यां भारतभुवमलञ्चकारेत्यत्र सन्ति बहून्युपोद्बलकानि प्रमाणानि । कालिदासः रघुवंशस्य षष्ठे सर्गे नवपञ्चाशत्तमे पद्ये पाण्ड्यानां राजधानीमुरगपुरमुल्लिलेख ।[1] इतिहासप्रमाणैर्ज्ञायते यत् ख्रीस्तप्रथमशताब्द्या उपरिष्टाद् उरगपुरं न कदापि पाण्ड्यानां राजधानी बभूव । एवमेव मेघदूते विदिशा दशार्णदेशस्य प्रथिता राजधानी निर्दिष्टा ।[2] विदिशेयं ख्रीस्ताब्दात्पूर्वं शुंगवंशीयनृपस्य राजधानी बभूव । ख्रीस्तात्पूर्वं ७२ तमे वर्षे क्षीणे शुंगवंशे विदिशाऽपि राजधानीपदात्पतिता । तदनन्तरं सा न कस्यापि प्रदेशस्य राजधानीपदं प्राप । अतः कालिदास एतत्कालसमीपवर्ती स्यात् । भारतीयपुरातत्त्वसर्वेक्षणाधिकारिभिः भीटास्थाने प्राप्ते मण्डलके शाकुन्तलप्रथमाङ्कस्य दृश्यमङ्कितमिति वर्णितं विद्यते । विवरणकारदृशा स्पष्टं प्रतिभाति यदेतन्मण्डलकं शुंगकालीनम् (ख्रीस्तात्पूर्वं १८० तः ७२ वर्षपर्यन्तम्) अस्ति । परं पूर्वाग्रहग्रहिलोऽसौ दृश्यस्याधारं कमप्यन्यं ग्रन्थं तर्कयते । किन्तु महाभारते शाकुन्तलोपाख्याने तद्दृश्यं नास्ति चित्रितम् । पद्मपुराणे दृश्यमेतद् वर्णितमस्ति परं तन्नूनं कालिदासात्परवर्ति । मालविकाग्निमित्रे शुङ्गवंशसंस्थापयितुः पुष्यमित्रस्य तदात्मजस्याग्निमित्रस्य च विषये नैकघटनाजालपरिचितत्वात्कालिदासस्य तात्कालिकत्वं ततः किञ्चित्कालानन्तरभवत्वञ्चाद्धा प्रकटीभवति । भरतवाक्ये नेतुरग्निमित्रस्य निर्देशोऽपि विचारणीयः प्रतिभाति ।[3] यतो हि भरतवाक्यस्य सम्बन्धो वस्तुना नैव भवति अपि तु तात्कालिकेन नृपेण देशेन समाजेन च । एवं खलु कविः कालिदासः ख्रीस्ताब्दात् किञ्चित्पूर्वमेव स्वजनुषा भुवमलञ्चकारेति विदुषां विचारः ।

किन्तु को न्वासीत्कविवरस्य समाश्रयिता शकानां शातयिता मालवानाञ्च शासिता विक्रमादित्यः । प्राचीने संस्कृतवाङ्मये पारम्परीणासु च भारतीयानुश्रुतिषु विक्रमादित्यनामा (न तु विरुदभाक्) कश्चन परमप्रतापवान् मालवेन्द्रः स्मर्यते । तस्य राजधानी उज्जयिनी बभूव । असौ वैदेशिकान् शकानाक्रम्य मध्यभारतीयमालवप्रान्ते मालवगणं प्रतिष्ठापयामास तत्स्मृतिरूपेण च

---

१. अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥
रघु० ६।५९

२. तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम् । मेघ० १।२६

३. आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥
माल० ५।२०

विक्रमसंवत्सरं प्रवर्तयामास यदद्यापि जन्मपत्रलग्नपत्रदानपत्रसंकल्पपाठप्रभृतिषु सततमविच्छिन्न प्रयुज्यमान दृश्यते । आन्ध्रवंशीयसातवाहननृपेण हालनाम्ना प्रणीताया गाथासप्तशत्या दानशीलस्य विक्रमादित्यस्य निर्देशो वर्तते । अस्य च काल खीस्तशताब्द्याः पश्चान्नेतु न पार्यते ।[1] तत्समकालीन-कवेर्गुणाढ्यस्य पैशाचभाषाया रचिताया बृहत्कथाया एकादशशताब्द्या क्षेमेन्द्रसोमदेवसूरिकृतयो. संस्कृतरूपान्तरयो. बृहत्कथामञ्जर्यां कथासरित्सागरे च विक्रमादित्यनृपस्य कथा विस्तरेणोट्टङ्किता विद्यते । एवमनुमीयते यत्कथा-सरित्सागरस्य मूलस्रोतसः बृहत्कथायाः सर्जनात्पूर्वं (प्रायेण खीस्ते ७८ वर्षे) विक्रमादित्यनामा कश्चन नृपो म्लेच्छोच्छेदनमापाद्य स्वकीय विक्रमसवत्सरं प्रवर्त-यामास । शतपथब्राह्मणस्य भाष्यकृता हरिस्वामिना अपि प्रतिपादित यत्तेन स्वकीयं भाष्यं विक्रमादित्यकाले कलिसंवत्सरस्य ३०४७ तमे वर्षे (खीस्ताब्दात् ५५ वर्षपूर्वं) रचितम् । अनेनापीदमापतति यत् कश्चन विक्रमादित्यः खीस्तात् पंचाशद् वर्षाणि पूर्वम् उज्जयिनी राजधानी कृत्वा मालवदेशं शशास । स्कन्दपुराणे जैनानुश्रुतिषु[2] चाप्यस्य विक्रमादित्यस्योल्लेखो दृश्यते । जेम्सफर्गुसनमहोदयेन[3] ५४४ खीस्ताब्दात् पूर्वं नाय विक्रमसंवत्सरः क्वचिदप्युट्टङ्कितोऽवलोक्यते इति या विप्रतिपत्तिरत्र कृता तस्याः समाधानं कुर्वद्भिः श्रीवागीश्वरमहोदयैः साधु प्रतिपादित यत्कालादस्मात् पूर्वं प्रयुज्यमानः कृतसंवत्सरो मालवसंवत्सर-श्चापि विक्रमसंवत्सरादभिन्नौ स्तः ।[४] एवं खलु स्पष्टमेतद् यत् खीस्तात्पूर्वं प्रथम-शताब्द्या कश्चन विक्रमादित्यनामा साहसाङ्क इति विरुदभाग् नृपो मालवानां शासिताऽभूत् । अस्य राजधानी उज्जयिनी आसीद् । महेन्द्रादित्यसुतोऽयं शिवाराधको विद्याव्यसनी कवीनाञ्च सम्भावयिता बभूव । अस्यैव राजसभायां कवेः कालिदासस्य स्थितिः प्रबलं सम्भाव्यते । अयं नृपः शकानां शातयिता 'शकारिः' इति प्रख्यातः । अस्यैव विजयमभिलक्ष्य कविना एकतमस्य स्व-नाटकस्य सज्ञा 'विक्रमोर्वशीयम्' इति कृता । एवं क्वचित् क्वचिच्च विक्रमपदस्य महेन्द्रपदस्य च साभिप्रायः प्रयोगो विहितः ।

कालिदासस्य जन्मस्थानस्य निश्चयोऽपि तथैव दुरूहो यथा जन्मकालस्य । कालिदासो ह्यस्माकं राष्ट्रियकविः । स च बहुशो राष्ट्रगौरवगीतान्यगायद् बहूनां प्रदेशानाञ्च यथार्थवर्णनं चकार । केचन समालोचकाः 'कालिदास'

---

1. *Early History of India* (V. Smith), p. 220
२. विक्रमस्मृतिग्रन्थः, पृ० १६५ (हरिहरनिवासस्य लेखः)
3. Journal of Royal Asiatic Society, 1870, p. 81.
४. कालिदास और काव्यकला, पृ० २६

इति संज्ञामाश्रित्य तं कालीदेव्याः भक्तं वङ्गदेशीयं साधयन्ति । तेषामपरस्तर्को मेघदूतस्य 'आषाढस्य प्रथमदिवसे' इति पदांशमाश्रित्य वर्तते । इयं सौरमासगणना वङ्गेषु प्रचलिता बभूव । अत एव च जन्मजातसंस्कारवशादसौ पक्षस्य तिथेर्वा उल्लेखमकृत्वैव 'प्रथमदिवसे' इति पदप्रयोगं चक्रे । परं कवेः कृतिपु न किमपि प्रमाणं लभ्यते यत् तं काल्याः भक्तं प्रतिपादयेत् । एवमेव 'आषाढस्य प्रथमदिवसे' इत्याश्रित्य वृथैवोद्भावनं कवेः स्वच्छन्दतायाञ्च निरर्थकमंकुशाधानं न कथमप्यनुमोदनीयम् ।

कालिदासो बहुशः विदर्भदेशस्य सजीवं वर्णनं व्यदधात् । 'मालविकाग्निमित्रस्य' नायिका मालविका विदर्भराजकन्या वर्तते । रघुवंशेऽपि विदर्भराजकुमार्या इन्दुमत्याः स्वयंवरः प्रणयश्च वर्णितः । 'मेघदूतस्य' रामगिरिर्वर्तमानो रामटेकः नागपुरनिकटवर्ती स्वल्वस्ति । 'ऋद्धां विदर्भाधिपराजधानीम्' इत्यादीनि भाषितानि विदर्भस्य तात्कालिकीं सुखसम्पदं सुराज्यञ्च सम्यग् प्रकटयन्ति । अपरञ्च कविरात्मनः समग्रेषु ग्रन्थेषु वैदर्भीरीत्याः शोभनं निर्वाहं विधाय तां रीतिं विद्वन्मान्यां चकार । एभिः प्रमाणैः पीटर्सनराजबलिपाण्डेयप्रमुखा विद्वांसः कालिदासं वैदर्भं साधयन्ति । परं नैतत्समीचीनम् । नाय कविः विदर्भभुवः कस्याप्यंशस्य विशिष्टं वर्णनं करोति । एवमेव कालिदासो वैदर्भीं रीतिमङ्गीकृतवानिति तस्य वैदर्भसाधनाय नास्ति सम्यक् प्रमाणम् । वैदर्भीरीतिस्तदा विदर्भाद् बहिरपि प्रचलिता सर्वजनमनोभिरामा च बभूव ।

शास्त्री हरप्रसादः पराजपेमहोदयश्चाकथयतां यत् कालिदासेन मेघदूते विदिशां वर्णयता तन्निकटवर्तिनां नीचैर्गिरिप्रभृतिपदस्थानानां निर्देशोऽकारि । अनेन ज्ञायते यत् कविरिमं प्रदेशं सम्यगजानात् । तद्वर्णनेन प्रतीयते यदयं गिरिरेताश्च सरितः कालिदासस्यात्यन्तं प्रिया आसन् । तस्मादसौ मूलतो विदिशानिवासी भवेत् । परं नासौ विदिशावर्णनं द्वित्रिभिः श्लोकैरेव समापयेत् इति विदिशाभवं न मन्यन्ते विद्वांसः । तेषाञ्च मते विदिशां प्रति कवेर्न कोऽप्यनुरागविशेषो व्यज्यते ।

वाराणसेयसंस्कृतविश्वविद्यालयस्य भूतपूर्वः कुलपतिः श्री आदित्यनाथझामहोदयः प्राथमिकमेकं लेखमाससाद । तदनुसारेण दरभङ्गाजनपदे वेणीपाल्लगंते उच्चैठग्रामे एकायाः प्राचीनायाः नद्याः पश्चिमे कूले भगवत्याः दुर्गाया एका प्राचीना मूर्तिर्वर्तते । तस्याः पूर्वदक्षिणतः एको वप्रोऽस्ति यः पुराकालात् 'कालिदासविद्यापीठ' नाम्ना विख्यातिं गतः । लेखपालानां पत्रेषु इयं भूमिः 'कालिदास की चौपड़ी' इति नाम्ना अंकिता । परम्परानुगतजनश्रुत्या कालिदासोऽत्रैव विद्यां लेभे । अनेनानुमीयते यत्कालिदासस्य जन्मभूमिरपि निकषैव कुत्रचिद् भवेत् ।

पर मिथिलायाः प्रकृतेस्तत्रत्यजनसमुदायान्तःप्रचलितानां सरसानां लोकगीतानां मैथिलसुकुमारीणां चेतोहरस्य सौन्दर्यस्य च सचेष्ट वर्णनं कविः कुत्रापि चकारेति तस्य कृतिभिर्न ज्ञायते। मिथिला देवभारत्याराधकानामतिप्राचीना प्रख्याता च भूरभवत्। सम्भाव्यते यदुक्तदुर्गाभूम्याः सविधे सङ्घीभूय मैथिल पण्डितसमुदाय' कविकुलगुरोः कालिदासस्य विषये काव्यचर्चां विचारविमर्शं वा कुर्वन् भवेत्। कालान्तरे चेयं 'कालिदास की चौपड़ी' इति सज्ञा लब्धवती स्यात्।

दिल्लीविश्वविद्यालयस्य भूतपूर्वः सस्कृतविभागाध्यक्षः श्रीलक्ष्मीधरवल्लामहोदयो निम्नतथ्यान्याश्रित्य काश्मीरदेशः कालिदासस्य जन्मभूमिरिति प्रत्यपीपदत्।

(१) कालिदासस्य ग्रन्थेषु हिमाद्रेः वर्णनं विस्तृतमतिसूक्ष्मेक्षिकया च विहितम्। कुमारसम्भव महाकाव्यं तु हिमालयवर्णनादेवोपक्रान्तम्। 'मेघदूते' वर्णिता यक्षवासभूमि'रलका' हिमालयस्थिता एवासीत्। 'विक्रमोर्वशीये' उर्वशीपुरूरवसोः कुमारसम्भवे शिवाशिवयोः प्रणयलीला गन्धमादनपर्वते समपद्यत। कण्वमारीचप्रभृतीनाम् ऋषीणामाश्रमाः हिमाद्रावेव प्रतिष्ठिताः। सर्वैरप्येभिरुल्लेखैः कवेः प्रभूत हिमालयप्रेम व्यज्यते। सर्वाणि चैतानि स्थलानि काश्मीरेषु सिन्धुनद्या उपत्यकायां प्रतिष्ठितानि।

(२) काश्मीरदेशीये नीलमतपुराणे कुबेरो दैत्यानां निष्कासाय निकुम्भं न्ययुङ्क्त। रघुवंशे वसिष्ठधेनोराक्रान्ता सिंह आत्मान निकुम्भमित्रं प्रतिपादयति। एव प्रतीयते यत्कालिदासः कश्मीरप्राचीनकथाभिज्ञः। तस्य कृतिषु कश्मीरदेशस्य विशिष्टप्रथानां प्रतिबिम्ब भासते। विवाहकाले कश्मीरदेशे श्वश्रवा अन्यया वा कयाचित् सौभाग्यवत्या नार्या वरग्रीवायां मालाविन्यासस्य प्रथा पुराकालादागता। स्वयंवरोत्सवे इन्दुमती उपमातुः सुनन्दायाः हस्ताभ्यामजस्य कण्ठे पुष्पस्रज निधापयति। कश्मीरदेशे धीवरव्यवसायः अत्यन्तं गर्हितः। 'शाकुन्तले' धीवरप्रसङ्गे इयं मान्यता प्रतिबिम्बिता लक्ष्यते।

(३) कश्मीरदेशकृतौ प्रत्यभिज्ञादर्शने समुल्लिखितं यद् आत्मनः आवरणं सद्गुरोरुपदेशेनात्मदर्शनाभ्यासेन वा क्षीयते, आत्मा च स्वपूर्वरूपं प्रत्यभिज्ञाय परमात्मनि लीयते, सत्स्वरूपस्य विस्मृतिः नियतिहेतोः सम्पद्यते, नानाकारणैश्च तदावरणं शनैः शनैरपाक्रियते, आत्मा नैजं विशुद्धमनाविलं रूपं प्रत्यभिजानाति। कालिदासस्य सर्वेष्वपि नाटकेषु कश्मीरशैववादस्य इयं कल्पना दृग्गोचरीभवति। 'मालविकाग्निमित्रे' सिद्धादेशेन मालविका वर्षभोग्यमज्ञातवासं वसति। अनन्तरञ्च निजदासीभिः प्रत्यभिज्ञायते। 'विक्रमोर्वशीये' उर्वशी कार्तिकेयशापेन लता

जायते । ततश्च सङ्क्रमनीयमणिसंयोगेन स्वीयं पूर्वरूपं भजते । 'शाकुन्तले' दुर्वाससः शापेन दुष्यन्तः शकुन्तलां विस्मरति । मुद्रादर्शनसमकालमेव चासौ पूर्वस्मृति लभते । एभिः प्रसङ्गैः निसर्गत एवेदं सिद्ध्यति यत् कविः प्रत्यभिज्ञादर्शनेन प्रभावित आसीत् ।

(४) 'मेघदूते' अलका कैलासपर्वते प्रतिष्ठिता इत्युक्तम् । अयं कैलासः कश्मीरदेशस्य 'हरमुकुट' नाम्ना ख्यातः पर्वतो वर्तते । अलकास्थितस्य यक्षभवनस्य वर्णनं हरमुकुटपर्वतोपत्यकायां स्थितेन पुरामवेन मयग्रामेन अक्षरशः घटते । विविधपुष्पाणां नृत्यगीतानां सुरापानस्य च यद्वर्णनं मेघदूते कृतं तद् कश्मीरानेवानुगच्छति । कश्मीराणामीदृशेव वर्णनं कल्हणस्य 'राजतरङ्गिण्यां' बिल्हणस्य 'विक्रमाङ्कदेवचरिते' चोपलभ्यते । अत एव स्वकाले उत्कर्षं गतस्य मयग्रामस्य निजजन्मभुव एव वर्णनं कालिदासेन कृतम् । अयं मयग्रामः कश्मीरेषु वर्तते । अतो वक्तुं शक्यते यत् कालिदासः काश्मीरवास्तव्य आसीद् ।

कल्लामहोदयस्य मतमापाततः पर्याप्तं प्रबलमस्ति । परं तत्त्वतः समीक्ष्यमाणं न याथार्थ्यनिकषे स्थातुं प्रभवति । कालिदासकृतिषु का कथा कश्मीरान् प्रति विशिष्टानुरागस्य, तन्नामापि न दृक्पथमवतरति । नीलमतपुराणमनुसृत्य यानि स्थानानि सरितः पर्वतान् तीर्थांश्चासौ कश्मीरेषु प्रतिपादयति तत्सर्वमयथार्थम् । किञ्च कालिदासीयाभिज्ञानशाकुन्तलं महाभारतीयशाकुन्तलोपाख्यानाश्रितमस्ति न पुनः नीलमतपुराणमाश्रित्य प्रवृत्तम् । यान् व्यवहारान् याश्च रीतीराधृत्य कल्लामहोदयः कालिदासं कश्मीरं साधयितुं प्रयतते ते व्यवहाराः ताश्च रीतयः भारते अन्यत्रापि दृष्टिपथमायान्तीति नैताभिर्युक्तिभिस्तस्य कश्मीरभवत्वं साधयितुं शक्यते । सुनन्दया आख्या वरमालापरिधानप्रसङ्गो वस्तुतः स्वयंवरमहोत्सवे निबद्धः । तेन विवाहविषये कोऽपि परिणामविशेषो न व्यज्यते । धीवरस्य कर्म धर्मशास्त्रेषु सर्वत्र गर्हितं न केवलं कश्मीरेषु । एवमेव सूर्योपासनाशिवपूजनादयो रीतिविशेषा अपि भारते सर्वत्रैव दृश्यन्ते न केवलं कश्मीरेषु । कालिदासकाव्येषु प्रत्यभिज्ञादर्शनस्य प्रभावोऽपि नियततया निर्धारयितुं नैव शक्यते । वस्तुतो दर्शनमिदं शाङ्कराद्वैतेन भूयसा संवदति ।

कालिदास उज्जयिनीवर्णने एवं विशेषमादरवान् दृश्यते । कविरुज्जयिनीवर्णने विशेषं पक्षपातं दर्शयति । 'मेघदूते' यक्षः सत्यपि कुटिले पथि श्रीविशालां द्रष्टुं मेघं साग्रहम् अभ्यर्थयते । यदि उज्जयिन्याः प्रासादस्थितानां रमणीनां कुटिलकटाक्षदर्शनाद् वञ्चितः स्यात्तदा तस्य जीवनमेव निष्फलम् । कालिदासः

अवन्तिप्रदेशस्य भौगोलिकस्थितेः सूक्ष्मवर्णनं 'मेघदूते' चकार। तत्रत्यानां अल्पसरितामपि सनामनिर्देशं वर्णनमकरोत्। कालिदासः एकादशश्लोकैः उज्जयिन्या अपरिमितसम्पत्तेः, शिप्रानद्याः वहन्त्याः मसर्गात् कुसुमामोद-सुरभिणः समीरस्य, तत्रत्यस्थानानां सम्बन्धे विख्यातानां प्राचीनगाथानां तन्नगरीस्थस्य महाकालमन्दिरस्य सायम् आरातिकामये प्रवृत्तस्य वेश्यानृत्यस्य, निशि प्रियाश्लेषसमुत्सुकानां सारिकाणाञ्च वर्णनं तथा रामणीयकेन चकार यथा उज्जयिन्याः तत्कालीनं दृश्यम् अस्मन्नेत्राणां पुरतो नरीनृत्यतीव। नैतावदेव, कालिदासो देवालये पूजार्थं नियुक्ताभिर्देवदासीभिरपि परिचितः। उज्जयिनी वासवदत्तोदयनयोः प्रणयस्य क्रीडास्थली आसीत्। फलतः कालिदासः तत्कथासम्बद्धेतिवृत्तानां स्थानोल्लेखं विधाय पुरीं प्रति पूर्णं पक्षपातं प्रदर्शयति। अलकां विहाय कस्याश्चिदपरायाः नगर्याः तादृग् रमणीयं विशदञ्च वर्णनं नाकारि कविना। अलका लौकिका देवनगरी वर्तते। अत एव तामुपवर्णयन् कवि स्वकल्पनानाकेः पर पारं जगाम। मर्त्यलोकस्य कस्याश्चिदपरया नगर्या तत्प्रेम न विलोक्यतेऽस्य कवेः यदुज्जयिन्या वर्तते। इत्थं कविना उज्जयिनीं प्रति तथा पक्षपातः प्रदर्शितः येन सा नगरी कवेः जन्मभूमिगौरवं प्राप्तुमर्हति।

इदानीं कालिदासकृतीरुपलक्ष्य किञ्चिद् विमृश्यते। भूयांसि खलु काव्यानि कालिदासनाम्ना प्रथितानि। कालेमहोऽस्येन स्वकीयाभिज्ञानशाकुन्तलस्य भूमिकायाम् एकचत्वारिंशत् काव्यानि कालिदासनाम्ना समुद्धृतानि। किन्त्वेतेषां काव्यानां भावां शैली च सम्यक् विविच्य भारतीयविद्याविशारदा इदं निर्णीतवन्तो यन्नैतानि काव्यानि कवेः रघुकारस्य लेखन्याः समागतानि। रघुकारेण तु ऋतुसंहारं मेघदूतञ्चेति खण्डकाव्यद्वयं कुमारसंभवं रघुवंशञ्चेति महाकाव्यद्वयी मालविकाग्निमित्रं विक्रमोर्वशीयम् अभिज्ञानशाकुन्तलञ्चेति नाटकत्रयम् इत्येवं सप्त काव्यानि प्रणीतानि। अत्रापि केचित् काव्यकारं कालिदासं नाट्यकृतः कालिदासात् पृथक्कुर्वन्ति। तन्न समीक्षामहम्। उभयोः भावसाम्यं शैलीसाम्यञ्च स्फुटं दरीदृश्यते।

आदौ तरुणः प्रणयस्फूर्तश्च कविराड् ऋतुसंहाराख्यं लघुखण्डकाव्यं प्रणिनाय। अत्रासौ प्रत्येकम् ऋतुषु नागरिकैः क्रियमाणानाम् आमोदप्रमोदानां तासाञ्च जीवानां जीवने प्रभावस्य वर्णनमतीव रमणीयतया चकार। प्रथमेयं कृतिरित्यत्र नास्ति काव्येतरसुलभा प्रौढिः। शृङ्गारस्यापि स्थूलरूपमेवात्र कविं प्रसभमाकर्षति।

कवेः कालनिर्णयप्रसङ्गे पूर्वं प्रतिपादितं यत्कालिदासो विदिशाशासकस्य

शुंगवंशस्य अग्निमित्रस्य समकालिक अथवा किञ्चिदूनसमयानन्तरमेवोज्जयिन्यामुवास । अग्निमित्रः विदर्भनृपं यज्ञसेनजायासहोदरं मौर्यसचिवं स्ववशे कृत्वा कारावासे न्यक्षिपत् । यज्ञसेनसहोदरो माधवसेनस्तदाऽग्निमित्रेण सह सौहार्दमकरोत्, स्वां भगिनीञ्च तमुपनिन्ये । इमां राजनीतिपृष्ठभूमिमाश्रित्य अग्निमित्रस्य माधवसेनसहोदर्या मालविकया प्रणयस्य विवाहस्य च कथां कालिदासो मालविकाग्निमित्रनाम्नि नाटके न्यबध्नात् । नाटकमिदमतीव लोकप्रियमासीत् । तेन भातितमं प्रभावितो नृपो विक्रमादित्यः कविमिमं स्वराजसभायाः प्रमुखं रत्नं चकार । अस्य विक्रमादित्यस्य कस्मिंश्चिद् विलक्षणविजयप्रसङ्गे कविचक्रवर्ती कालिदासो विक्रमोर्वशीयं द्वितीयं नाटकमरचयत् ।

प्राप्ते राज्याश्रये कदाचिद् राजादेशेन प्रियया विप्रयुक्तोऽसौ क्वचिदन्यत्र गन्तुं विवशीकृत इतीमामेव व्यथामसौ मेघदूतेन प्रकटीकरोति । तदनन्तरमसौ कुमारसम्भवं नाम काव्यं निर्ममे । शैल्याधारेणैतन्निश्चप्रचं यदिदानीमुपलभ्यमानं सप्तदशसर्गात्मकं काव्यं नास्ति निखिलं कालिदासविरचितम् । अतः खलु मल्लिनाथस्य अष्टमसर्गपर्यन्तमेव विवृतिरुपलभ्यते । प्राचीनेष्वलङ्कारग्रन्थेष्वपि अष्टमसर्गादनन्तरप्रयुक्तानां पद्यानां समुद्धरणं न कुत्रापि दृग्गोचरीभवति । अत्र यत् शिवपार्वत्योः सम्भोगशृङ्गारस्य अश्लीलवर्णनं तदानीन्तनसमाजासह्यमभूदतस्तेन कवेः कटुरालोचनाऽभूत् । तेन च हतोत्साहः कालिदासः स्वं काव्यमपूर्णमेव व्यदधात् । परं नैतन्मतं समीचीनं प्रतिभाति दण्डिभामहवामनानन्दवर्धनमम्मटादिभिराचार्यैः रसदोषप्रसङ्गेषु न कुत्रचिदप्यस्य सर्गस्य निन्दा कृता । पण्डितराजो जगन्नाथो गीतगोविन्दकारं जयदेवं निन्दति न पुनः कालिदासम् । अतो वस्तुतः कालिदासेन अष्टसर्गात्मकमपूर्णमेव काव्यं प्रणीतमभूत् । केचन कवेरसामयिकनिधनं महाकाव्यस्यापूर्णताया हेतुमाहुः, तदप्ययुक्तम् । यतो हि कविरयमेतत्काव्यानन्तरमेव रघुवंशमभिज्ञानशाकुन्तलञ्च निर्मिमायेत्यत्र नास्ति संशयलवोऽपि । अस्मन्मते तु स्वाश्रयप्रदस्य भूपतेर्महिष्या गर्भिणीभावे कुमारजन्म आशसानः कालिदासः कुमारजन्मावसरे किमपि काव्यमुपायनीकर्तुं निश्चितमनाः राजकुमारं शिवकुमारञ्चोभावपि मनसि निधाय कुमारसम्भवमिति काव्यं प्रारेभे । राजकुमारस्य जन्मोत्सवावसरे अपूर्णमेव काव्यं नृपाय समर्पितवान् । स्कन्दोत्पत्तिवर्णनं वस्तुतो नाभूदस्य लक्ष्यम् ।

तदनन्तरमसौ रघुवंशं प्रणिनाय । इदानी तस्य भावेषु प्रौढिः भाषायां परिष्कृतिः शैल्या परिमार्जनं ज्ञाने गरिमा काव्यप्रतिभायाञ्च प्रखरता समु-

त्पन्ना। तेन च महाकाव्यमिदं श्रेष्ठं सम्पन्नम्। स्वकीयान्तिमनाटकस्याभिज्ञान-शाकुन्तलस्य रचनामसौ देवालये हिमालये चकार। तत्र च पुनर्जन्मचक्रात् परित्राणमाप्तु स्वशेष वयो नीललोहितस्य शिवस्याराधनायां निनाय।

## (ग) कालिदासशब्दपरिपाकविषये विदुषां मतानि

सरस्वतीसमुपासकः कविकालिदासः स्वपीयूषवर्षिण्या लेखन्या यत्किमपि ससर्ज तत्काव्यरसमर्मज्ञैर्विपश्चिद्भिर्मुक्तहृदयेनास्वादितम्। कश्चित्तस्योपमासौष्ठवेना-कृष्टस्तथाऽपरस्तस्य मधुरसान्द्रासु सूक्तिषु प्रीतिमधत्त। अन्ये काव्यवेत्तारः तच्छब्द-विन्यासनैपुण्येन प्रभाविता' स्वोद्गारान् प्रकटयाञ्चक्रुः। तेषु करुणाकुमारशास्त्रि-महाभागस्त्वेवमाह—तस्य हि शब्दविन्यासनैपुण्यमीदृशं यत् तदीयकाव्येषु यत्र कुत्रापि पदानां परिवर्तनं परिवर्धनं परिवर्जनं वा सौन्दर्यलाघवायैव।'[१] शब्द-परिपाकमहत्त्वमाकलयन्नेव शास्त्रिवर्योऽन्यत्र लिखति—'यत्र यस्य शब्दस्य विनियोगाद् भावप्रकाशसौष्ठवं जायते, यस्य भावस्य विकासान्निसर्गसुन्दरीशा-मालेख्यमालानां भूयसी चारुता संवर्द्धते तत्र तेन तथैव शब्दा भावात्मक-निहिताः। येनैव चित्रेण प्राणोपून्मादो न जायते, येनैव शब्देन कर्णयोरमृतवर्षणं न भवति; न तच्चित्रं चित्रितं, न वा तादृशः शब्दः परिगृहीतः कविना।[२]

आन्ध्रविश्वविद्यालयीयो विद्वान् सी० कुन्हनराजमहोदयः कालिदासीय-शब्दपरिपाकमभिलक्ष्यैवाह यद् नाय कविः छन्दःपूर्त्यै शब्दांश्चिनोत्यपि तु यादृशाः शब्दा विच्छित्तिविशेषं कञ्चिद् ध्वनयन्ति तादृशाः शब्दास्तेन प्रयुज्यन्ते।[3]

ई आर श्रीकृष्णमहाभागश्चेमं शब्दपरिपाकं 'वाक्तत्त्वमि'त्यभिमत्ते।

---

१. 'कालिदासीयकुमारसम्भवम्' संस्कृतसाहित्यपरिषत्, कलकत्ता, Vol. XXXIII/No. 8, Dec. 1950, p. 89.

२. 'कालिदासीयकुमारसम्भवम्' संस्कृतसाहित्यपरिषत्, कलकत्ता, Vol. XXXIII/No. 7, Nov. 1950, p. 81.

3. 'He does not select words because they fit into the metre; he selects words because that word brings out a particular suggested idea'.

—Kālidāsa—*A Critical Study*, p. 97.

तन्मते यथार्थकाव्यस्य कस्मिन्नप्यंशे नैकोऽपि शब्दः परिवर्तनसहो भवति ।[1]

वागीश्वरविद्यालङ्कारमहाभागेन तु कालिदासस्य शब्दपरिपाकविषये बहूक्तं स्वकीये ग्रन्थे । तदनुरूपं हृद्भावाविष्कारिणां शब्दानां चयनस्य विलक्षणा काचित् क्षमता कालिदासे । यदैव सः किञ्चिद्वक्तुमीहते तदैव तदर्थद्योतकानां भूयसां शब्दानां पङ्क्तिस्तस्य सम्मुखमनायासेनोपतिष्ठन्ति तस्य च चयनचतुरं चक्षुस्तन्मध्यादुपयुक्तपदावलिमेव गृह्णाति । न तन्मते कावपि द्वौ शब्दौ पर्यायवाचिनौ, प्रकरणानुरूपं तयोर्लक्ष्यार्थस्य व्यङ्ग्यार्थस्य वा भिन्नत्वात् । संस्कृतभाषायां हरभवपिनाकिपानिप्रभृतयः शब्दाः शिवपर्यायवाचिनः मन्यन्ते परं नैतदभिमतं कालिदासस्य । तेनैव तेषां शब्दानां प्रयोगः प्रसङ्गानुसारं परिवर्त्य कृतः ।[2]

विद्यालङ्कारमहोदयानुसारं सौन्दर्यचित्ररचनाविधौ न कोऽपि कविः वर्णतूलिकादीन् अपेक्षते । स तु तत्स्थाने तथाविधशब्दानां प्रयोगं कुरुते ये शब्दाः अस्माकं हृत्पटलेऽङ्किताः स्वतः सौन्दर्यचित्राणि चित्रयन्ति ।[3]

पण्डितवर्योऽम्बिकाप्रसाद उपाध्यायः शब्दार्थयोः शब्दस्यैव प्राधान्यमङ्गीकुर्वन् कवेः शब्दनैपुण्यं नितान्तमावश्यकं मनुते । तदर्थञ्च शब्दशास्त्रस्य पूर्णज्ञानम् अपेक्ष्यते इत्यङ्गीकरोति । अत्र विधौ कविसम्राड् कालिदासः शब्दशास्त्रे

1. 'Language attains perfection in poetry, for it is in it that the line of cleavage between thought and expression becomes as invisible as possible. That is why in a really poetic piece no word can suffer a change, that *is why a real poetry is never translated into another* tongue. It is true that word and meaning, thought and expression are inseparable, are but the two sides of the same coin : a fact which was realized by the ancient Indian grammarians: yet in analyzing language we have to speak of word, meaning and the relation between them as separate entities; that is why we often speak of choosing the right expression for the right thought'''

   Kālidāsa has realized this art of speech, the essence of poetry which lies in the inseparability of thought and expression. —Etymologies offered by Kālidāsa to his own words, *Kālidāsa Samīkṣā*, p. 54.

२. 'कालिदास और उसकी काव्यकला', पृ० २७२,

३. तत्रैव, पृ० १७४,

निष्णात आसीदित्यत्र नास्ति सन्देहलवोऽपि। तत्कृतीनामवलोकनेनैव ज्ञायते यच्छब्दशास्त्र तस्य दैनिकव्यवहारवदभ्यस्तमासीदित्युपाध्यायमहोदयस्य मतम्।[1]

आचार्यवर्यो बलदेव उपाध्यायश्च 'वर्ण्यविषयस्य वर्णनप्रकारस्य मञ्जुलसामञ्जस्यमेव कविकालिदासस्य प्रमुखो गुण' इति मन्यते। उपाध्यायमहोदयस्य मते कविः कालिदासः कैश्चिदुपयुक्तैः शब्दैर्यान् भावानभिव्यञ्जयति नान्य. कविस्तान् भावान् विस्तरेणापि प्रकटयितुमर्हः। औचित्यस्य तु कविरयं मर्मज्ञः। येषां भावानां यैः शब्दैः निरूपणं कलात्मकं रुचिरं च स्यात् तान् भावान् तैरेव शब्दैः प्रकटयित्वा स्वभावुकतां परिचाययति कविरयम्।[2]

---

१. 'कालिदास के शब्दप्रयोग' समीक्षा निबन्ध—
कालिदास ग्रन्थावली (सीताराम चतुर्वेदी), पृ० ३२.

२. संस्कृत वाङ्मय, पृ० ७१.

## द्वितीयः परिच्छेदः

### कालिदासीयशब्दानां परिपाकदृष्ट्या विश्लेषणम्

कविकुलचूडामणिः कालिदासो व्यञ्जनाकविर्गण्यते । अस्य काव्येषु वाच्यातिरिक्तमङ्गनासु प्रसिद्धावयवातिरिक्तं लावण्यमिव किमपि प्रतीयमानं मनोज्ञं वस्तु विराजते ।[1] इदमनभिहितं वाच्यातिशायि प्रतीयमानं तत्त्वमेव नूनं सहृदयानां हृदयेषु रससञ्चारमापाद्य तान् ब्रह्मानन्दसहोदरीभूतामवस्थां प्रापयति । ध्वनित्वेनैव किल कालिदासीयं काव्यमलोकसामान्यं मन्यते । सर्वत्र 'शब्दार्थयोरुभयोरपि ध्वननव्यापारः'[2] इति लोचनकारोक्तदिशा ध्वनिकाव्ये प्रत्येकं शब्दस्य साभिप्रायत्वं व्यञ्जकत्वं च नितरामपरिहार्यम् । संस्कृतवाङ्मये यद्यपि प्रत्येकं वस्तुनो भूयांसि नामानि प्रत्येकं शब्दस्य च भूयांसः पर्याया वर्तन्ते तथापि तेषु पर्यायेषु सूक्ष्मः कश्चनार्थभेदः दृश्यते । पर्यायत्वं हि तेषामदूरविप्रकर्षात् । सोऽयं सूक्ष्मोऽर्थभेदो व्यवहारदिशा निर्वचनदिशा मिथः संवादविसंवाददिशा चान्यैरुपायैर्वोद्भावयितुं शक्यः । तत्तद्गुणविशेषद्वारेणैकमेव वस्तु नानाभिधानतां भजते । तेषु तेष्वभिधानेषु यत्र कस्यापि गुणविशेषस्य प्राधान्येन ध्वननमभीष्टं कवेस्तत्र नानाभिधानेषु कमप्येकमेव प्रयोगविषयतां नयति कविः । तत्र च न कश्चन प्रयासोऽपेक्षितस्तस्य । निसर्गत एव कवेरेतादृशी समुच्चरति वाक् या विवक्षितविशेषं कमपि पुष्णाति काव्ये । तस्य शब्दविन्यासनैपुण्यमीदृशं यत्करयापि शब्दस्य परिवर्तनं सौन्दर्यलाघवायैव । तेन च, तेन प्रयुक्तं न किमपि परिवर्तनं सहते । अपारो हि महाकवेः शब्दनिधिस्तेन विवेचनीयमपि प्रतिपदं न विवेक्तुमत्र शक्यते । अतः प्रमुखाः केचन शब्दाः कोशकारपद्धत्या 'देवतावर्गः प्रकृतिवर्गो मनुष्यवर्ग इत्येतेषु, त्रिषु वर्गेषु विभज्य विवेचिताः ।

---

१. प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥
—ध्वन्यालोकः १।४

२. तत्रैव १।६ (लोचनटीका)

(क) देवताधर्मः

एकैका अपि देवता माहाभाग्याद् बहुधा स्तूयते। तत्तत्कर्मवैशिष्ट्यवशादेकैकस्या अपि देवताया बहूनि नामधेयानि भवन्ति। तथा हि भगवान् शार्ङ्गधनुर्धारणात् शार्ङ्गी शार्ङ्गपाणिर्वा, पीताम्बरधारणात् पीताम्बरः; सर्वचेतोहरत्वाद् दुःखहरत्वाद् वा हरिः, परमे व्योम्नि स्थितत्वात्परमेष्ठीति कथ्यते। शिवस्य शङ्करणात् शंकरः, पिनाकधनुर्धारणात् पिनाकी पिनाकपाणिर्वा, शूलधारणात् शूली, संहारकत्वाद् हरस्त्रिनयनत्वात् त्रिनयनस्त्र्यम्बको वा, स्थिरत्वात्स्थाणुरित्युच्यते, एवमिन्द्रस्य वज्रधारणाद् वज्री वज्रपाणिर्वा, गोत्राणां पर्वतानां भेदकत्वाद् गोत्रभित्, पुरां दारणात् पुरन्दरः, क्रतूनां शतस्य कर्तृत्वात् शतक्रतुरित्यभिधीयते। एवं माहाभाग्यात् कर्मपृथक्त्वाद् वा तैस्तैर्देवैः समुपलब्धानीमानि नामानि कालान्तरेण कोषकारैः पर्यायवचनेषु गणितानि। यथा—

> शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः।
> ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः॥[1]

परं रामायणमहाभारतादिषु बहुश एकस्मिन्नेव युगपत्प्रयुक्ता इमे शब्दा लक्ष्यन्ते।[2] यदीमे शब्दा एकैकस्य पर्यायास्तर्हि न युगपत्प्रयोगमर्हन्ति। एकेनैव शब्देनेष्टसिद्धेः। साध्विदं प्रतिपादितं श्रीमद्भिः सत्यव्रतमहाभागैर्यदेव वाक्ये युगपत्प्रयुक्तानीमानि पदानि न पर्यायवचनान्यपि तु विशेष्यविशेषणरूपाणि। तेष्वेकं पदं विशेष्यमन्यानि तु विशेषणान्येव।[3] भागवतपुराणादप्येभिर्महाभाग-

---

१. The Amarakaśa—१।२।३०

२. दृश्यते चैव वैदेहि शरभङ्गाश्रमो महान्
उपयातः सहस्राक्षो यत्र शक्रः पुरन्दरः॥
रा० ६।१२३।४६-४७
परिवार्यामृतं तस्थुर्वज्री चेन्द्रः शतक्रतुः।
महा० १।२६।४०
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम्।
महा० २।१७।१९
प्रहारषीद् यस्य ह्य पुरन्दरः शतक्रतुश्चरमे वर्तमाने॥
भाग० पु० ४।१६।२४

3. *The Rāmāyaṇa—A Linguistic Study*, p. 19

स्तादृशाः प्रयोगाः संकलितास्तेषां च तथैव विशेष्यविशेषणत्वं प्रतिपादितम्।[1] परवर्तिनां कवीनां काव्येष्विदं विशेष्यविशेषणत्वं लुप्तं शब्दश्चेमे स्वतन्त्ररूपेण प्रयुक्ताः। विष्णुरेव यत्रैकस्मिन्प्रसङ्गे हरिरन्यत्र विष्वक्सेनोऽपरत्र च शार्ङ्गी। कविभिरेतेषां शब्दानामभेदत्वेनैव यत्रतत्र प्रयोगः कृतः। नेमे शब्दा पर्यायमात्रा एव पर्यायत्वे हि 'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये' इत्यत्र हरपिनाकपाणिपदयोः सहप्रयोगो व्यर्थः स्यादतः पिनाकपाणिपदमत्र हरस्य विशेषणम्। एवं कालिदासेन यथास्थानं प्रयुक्तानीमान्यभिधानानि विच्छित्तिविशेषं प्रकटयन्तीत्यत्र प्रतिपाद्यते।

विष्णुः

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा॥[2]

नानावस्थागतत्वान्महिम्ना सर्वासु दिशासु व्याप्तत्वात् समुद्रस्येह विष्णुना साम्यं यथा विष्णुपदेनातिसमीचीनं न तथान्येन केनापि तत्पर्यायेण। 'वेवेष्टि व्याप्नोति चराचरं जगत् स विष्णुः यद्वा विशति सर्वस्य ब्रह्माण्डस्यान्तः प्रविशति, यद्वा व्यश्नुते व्याप्नोति सर्वं जगद्' इति 'विष्णु'रित्येभिर्निर्वचनैर्विष्णोः व्यापकत्वं सिद्धम्। तादृशस्य विष्णोः स्वरूपमीदृक्तयेयत्तया वा नूनमनवधारणीयमतो विष्णुपर्यायेषु विष्णुशब्दं वर्जयित्वा कोऽन्यः शब्दस्तथा दश दिशो व्याप्य स्थितस्य सागरस्योपमानतामर्हति। विष्णुपदस्य चायमेवार्थः कविनान्यत्र विशदं व्याख्यातो यथा—

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा हि ते।
चराचराणां भूतानां कुक्षिराधारतां गतः॥[3]

इत्यत्र हिमवतो महत्त्वं प्रख्यापयता स्थाने खलु विष्णुपदं प्रयुक्तं कविना विष्णुपुराणे तु विष्णुपदस्य निर्वचनमेव तथा कृतम्—

---

1. *Synonyms in the Bhāgavatapurāṇa*—Annals B.O.R. Institute, Vol. LI, 1971, p. 135.
२. रघु० १३।५
३. कुमार० ६।६७

यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।
तस्मादेवोच्यते विष्णुर्विशेर्धातोः प्रवेशनात् ॥[1] इति।

अन्येष्वपि स्थलेषु विष्णुशब्दप्रयोगे कवेरयमेव भावोऽभीष्टः। तद् यथा—

येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः ॥[2]

विष्णोः सादृश्यान्मेघस्य व्यापकत्वं स्वेच्छाविग्रहत्वञ्च प्रतिपन्नं कविना। जानामि त्वा प्रकृतिपुरुषं कामरूपं मघोनः[3] इति पूर्वमेवोक्तमस्माभिः।

एवञ्च—

तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥[4]

इत्यत्र व्यापकस्य त्रिविक्रमस्य विष्णोः श्यामः पाद इव तिर्यगायामेन क्षिप्रप्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभत इति तथाविधो मेघः सर्वगः कामरूपश्चेति।

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः।
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥[5]

विशति सर्वभूतेषु यद्वा विशन्ति सर्वभूतान्यस्मिन्निति विष्णुपदपदार्थात् पुरुहूतप्रभृतीनां स्वैः स्वैरंशैर्विष्णुमनुयानं युक्तियुक्तम्। विष्णुपदस्य चात्र नितान्तमौचित्यं सिध्यति।

विडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥[6]

सर्वशक्तिमान् विष्णुर्यथा बलिनियमनार्थमुपेन्द्रत्वं गतस्तथैव शक्तिसम्पन्नोऽपि त्वमनुजत्वाद् भ्रात्रा परवानसीति भावः। विष्णुरपीन्द्रकारणाद् वामनो जातस्त्वमपि भ्रातुः कारणादत्र मम विसर्जने पराधीन इति त्वं प्रशंसार्ह एव। एवमत्र विष्णुशब्देन लक्ष्मणस्योपमानतया शक्तावपि परवत्ताकारणं द्योत्यते।

---

१. विष्णुपुराण ३।१।४५
२. मेघ० १।१५
३. तत्रैव १।६
४. तत्रैव १।६१
५. रघु० १०।४९
६. तत्रैव १४।५९

विष्वक्सेनः

> निर्वर्त्यैवं दशमुखशिरश्छेदकार्यं सुराणाम् ।
> विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ।[1]

विषुशब्दो नानार्थो निपातः । विषु नाना अञ्चतीति विष्वक् । विषूची सेना यस्येति विष्वक्सेनो विष्णुः । 'पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दन' इत्यमरः । दशमुखशिरश्छेदकार्यं निर्वर्तयितुं तावद् विष्वक्सेन एवालम् । विष्वक्सेनपदौचित्यं चात्र स्पष्टम् ।

शार्ङ्गिन्

> स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि ।
> रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः ॥[2]

शार्ङ्गं धनुरस्यास्तीति शार्ङ्गी । विष्णुपर्यायेषु शार्ङ्गिपदप्रयोगोऽत्यन्तमुपयुक्तः । शार्ङ्गिणः शयनाय रसातलादुन्मग्नः शेष इव रामारोहणाय सेतुर्बद्धः । रामोऽपि धनुर्धारी । शार्ङ्गिपदेन चात्र रामस्य धनुर्धारणत्वं ध्वन्यते । प्रभावातिशयत्वं च सूचयितुं शार्ङ्गिपदस्योपपन्नत्वम् । एवञ्च—

> प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
> धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥[3]

धर्मसंरक्षणार्था भुवि प्रवृत्तिः शार्ङ्गिण एव युक्तियुक्ता । शार्ङ्गपाणिरेव विघ्नान्प्रतिकर्तुमर्हस्तेनात्र शार्ङ्गिण इति पदस्यौचित्यम् । तथैवाग्रेऽप्यस्मिन्नेव सर्गे यथा—

> समभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
> कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥[4]

इत्यत्र लवणान्तकस्य शत्रुघ्नस्य शार्ङ्गिणा साम्यं यथा सङ्गतं न तथा विष्णुना हरिणा नारायणेन वान्येन केनापि विष्णुपर्यायेण ।

> त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे[5]

यस्य हस्ते शार्ङ्गं धनुर्विद्यते तस्यापि वर्णस्य चौरेण नूनमतिकुशलेन

---

१. रघु० १५।१०३
२. तत्रैव १२।७०
३. तत्रैव १५।४
४. तत्रैव १५।४०
५. मेघ० १।५०

भवितव्यम् । तस्मादेव जलमादातुमवनते सति तस्मिन् वर्णचौरे मेघे गगनगतयो नूनं दृष्टीरावर्ज्य तं प्रेक्षिष्यन्त इति वर्णचौरस्य मेघस्य कुशलत्वप्रतिपादनाय विष्णुपर्यायस्य शार्ङ्गिण औचित्यम् ।

शार्ङ्गपाणिः

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ[1]

इत्यत्र शार्ङ्गपाणिपदेन विष्णोः कठोरत्वं द्योत्यते । यावन्न शार्ङ्गपाणिर्भुजगशयनं त्यजति तावन्न शापविमोचनमतः कुबेरादप्यधिकप्रभावः शार्ङ्गपाणेर्लक्ष्यते यत्राधीनं तयोर्मेलनम् । एवं शार्ङ्गपाणिपदोपादानम् । श्रीमद्रमायदुपालसिंहश्चात्र[2] शार्ङ्गपाणिपदोपयोजने दार्शनिकमपि किञ्चित्तत्त्वं सङ्केतयति स्वकीयायां टिप्पण्यामुदाहरति च विष्णुपुराणादेकं पद्यं यथा—"भूतादिमिन्द्रियादिं च द्विधाऽहंकारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्' इति । अस्य स्पष्टीकरणे च पूर्णसरस्वतीकृता टीकाप्युद्धियते—'तत्त्वदृष्ट्या निखिलेन्द्रिय-कारणभूततैजसाऽहङ्काररूपशार्ङ्गधारणात् सकलेन्द्रियप्रवर्तकत्वेनापरिलुप्तदक्षस्वरूपस्य, लोकदृष्ट्या दुष्टनिष्टापनप्रकृष्टदिव्यायुधवहनाल्लोककण्टकखण्डनव्यापृतस्य कुतो निद्राप्रसङ्गः कुतस्तरां च प्रबोधशङ्केति व्यज्यते । अतश्चातीतशरत्कालप्रारम्भे शापस्योपालम्भ इति गम्यते । तदानीञ्च तत्प्राप्तिः वर्षर्तुनिवृत्तानां प्रवर्तकत्वाच्छरदस्तदारम्भेऽप्यगत्य दयितादिसङ्गेन निधिपालनादौ स्वाधिकारे प्रमादादित्यवसेयम् ।' इति ।

केशवः

समागतास्त्रैलोक्यपुरुषाः सकेशवा लोकपालाः ।[3]

इत्यस्मिन् केवले प्रसंगे विष्णुपर्यायेण केशवपदं कविना प्रयुक्तं तच्च लक्ष्मीस्वयंवरे समागतानां लोकपालानां मध्ये विराजमानस्य विष्णोर्माहात्म्यमिवोद्भावयितुं संगच्छते । 'कः ब्रह्मा, ईशो रुद्रस्तावात्मनि स्वरूपे वयति प्रलये उपाधिरूपमूर्तित्रयं मुक्त्वैकमात्रपरमात्मस्वरूपेणावतिष्ठत'[4] इत्येतादृशः केशवोऽप्यत्र विराजते । न कच्चित्तेऽस्मिन् हृदयाभिनिवेश इति लक्ष्मीं प्रति वारुणीप्रश्ने ध्वनिः । यद्वा 'कन्या वरयते रूपं' मित्यभियुक्तोक्त्या प्रशस्ता

१. मेघ० २।५३
२. तत्रैव २।५३ स० रमायदुपाल सिंह, पृ० २४४
३. विक्रम० ३।०।१
४. श० क० द्रु०, द्वितीय० काण्डः, पृ० १६६

अभिरूपाः केशाः सन्त्यस्येत्येतादृशं केशवं प्रति लक्ष्म्या ध्यानाकर्षणहेतोरत्र केशवपदोपपत्तिः ।

पङ्कजनाभः

उन्नाभ इत्युद्गतनामधेयस्तस्यायथार्थोन्नतनाभिरन्ध्रः ।
सुतोऽभवत्पङ्कजनाभकल्पः कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥[1]

नृपमण्डलस्य नाभेरुन्नतनाभिरन्ध्रस्योन्नाभस्य विष्णुना साम्यं विष्णुपर्यायेषु सयोजनसङ्ख्या पङ्कजनाभपदमेव सुतरामुपपद्यते ।

परमेष्ठिन्

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छ्रिरसा त्वया ॥[2]

परमे व्योम्नि चिदाकाशे ब्रह्मपदे वा तिष्ठतीति परमेष्ठी विष्णुः । परमेष्ठिनः पादप्रभवत्वाद् गङ्गायाः श्लाघ्यं युक्तियुक्तम् । यस्यापि प्रभवो महास्तस्य श्लाघा स्वाभाविकी । शाकुन्तलेऽपि—'द्वन्द्वं दक्षमरीचिसम्भवमिदं तत्स्रष्टुरेकान्तरम्,[3] इति स्रष्टुरेकान्तरत्वं महर्षेर्मारीचस्य श्लाघाकारणं वर्णयति कविस्तथैवात्रापि विष्णुपादप्रसूतत्वाद् गङ्गायाः श्लाघ्यं तच्च परमेष्ठिपदेनाधिकमुपपद्यते ।

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥[4]

इत्यत्रापि महत्ताख्यापनार्थं परमेष्ठिपदप्रयोगः । 'महान्तो हि यथार्थवचनसुलभा इति भावः' इति मल्लिनाथः । 'सकलपरिपूर्णगुणस्य न चालीकवचोभिः प्रीतिरुपजायत' इति वल्लभाचार्यः । एवं खल्वत्र विष्णुपर्यायेषु परमेष्ठिपदौचित्यम् ।

पुरुषोत्तमः

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।[5]

हरिर्विष्णुः केवलः पुरुषोत्तम उच्यते नापरः कश्चित् । अत्र तु हरिपुरुषो-

---

१. रघु० १८।२०
२. कुमार० ६।७०
३. शाकु० ७।२७
४. रघु० १०।३३
५. तत्रैव ३।४९

त्तमयोर्विष्णुपर्याययोर्युगपत्प्रयोगो नितरामुपपन्नः। हरति पापानिति हरिः, यद्वा हरति आकर्षयति सर्वेषां मनुजानां चेतांसि स हरिर्विष्णुरेव पुरुषोत्तमः। यद्वा पुरुषोत्तमेत्यभिधानं केवलं पापहारकं चेतोहारकं वा हरिं सगच्छते नान्य कञ्चित्। क्षराक्षराभ्यां पुरुषोपाधिभ्यामध्यासेन पुरुषपदव्यपदेशाभ्यामुत्तमत्वाल्लोके वेदे च प्रथितः पुरुषोत्तम[1] एवान्येषां कल्मषापहरणक्षमो हरिरित्यत्रोभयपदौचित्यमुपलक्षते।

ततस्तया पुरुषोत्तमे इति भणितव्ये पुरूरवसीति तस्या निर्गता वाणी।[2]

इत्यस्मिन्प्रसङ्गे विष्णुपर्यायस्य पुरुषोत्तमपदस्यौचित्य स्पष्टमेव। समागतेषु कतमस्मिन् ते भावाभिनिवेश इति प्रश्ने लक्ष्म्याः स्वाभाविकमिदमुत्तरं यद् यः पुरुषेषूत्तमस्तस्मिन् मे हृदयाभिनिवेश इति प्रसङ्गात् पुरुषोत्तमपदोपपत्तिः पुरुषोत्तमे इति भणितव्ये पुरूरवसीति कथनमुभयत्र पुरुषदसाम्याज्जातमित्युर्वशीप्रसङ्गात् पुरुषोत्तमपदोपादानम्।

हरिः

हरिर्यथैकः पुरुषोत्तमः स्मृतः।[3]

इत्यत्र प्रयुक्तस्य हरिपदस्योपादानन्तु पुरुषोत्तमप्रसङ्गे पूर्वमेव व्याख्यातम्। सर्वचेतोहरो हरिरेव केवलं पुरुषोत्तम इति हरिपदौचित्यम्।

हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः॥[4]

युगदीर्घदोर्भिर्हरणकर्मणो हरेः प्रभावातिशयत्व सूच्यते हरिसादृश्याच्च दशरथस्यापि उत्कृष्टप्रभाववत्त्वं द्योत्यते।

विष्णुं प्रबोधयाम्यद्य शेषे सुप्तं जनार्दनम्।
चतुर्भुजं महावीर्यं दुःखहा स भविष्यति॥

इति देवीभागवतोक्त्या[5] चतुर्भुजस्य विष्णोः दुःखहारकत्वाद् हरणकर्मणो हरेरेव विष्णुपर्यायत्वेन प्रयोगः कवेः शब्दप्रयोगकौशलं प्रदर्शयति।

---

१. भ० गीता १५।१८
२. विक्रम० ३।०।१
३. रघु० ३।३९
४. तत्रैव १०।८६
५. दे० भा० पु० १।७।५

रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥[1]

इत्यत्र शब्दगुणं पदमन्तरिक्षं विगाहमानत्वाद् विष्णुपर्यायेषु विष्णुशब्द एवोचितः स्यात्। किन्तु रहसि जायां प्रत्युक्तौ हरति सर्वेषां चेतांसि ॥ हरिरेव युक्ततरस्तेनात्र कविनाऽन्यशब्दापेक्षया हरिपदं प्रयुक्तम् । रत्नाकरं वीक्ष्य जायामनो हृत्वा रहसि रामाभिधानो हरिरुवाचेत्यस्मिन् प्रसगे हरिशब्दे सङ्गतिः। 'रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम्' इति मल्लिनाथः।

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः।
त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव ॥[2]

व्यापकत्वमहिमाप्रसङ्गे विष्णुपदमेवात्रोपयुक्तं स्यात् स महिमा न स्थायी, केवलं त्रिविक्रमोद्यते सत्येव हरेर्व्यापकत्वमहिमा विद्यते न तु सर्वदा, तव हिमवतस्तु स महिमा नित्यसिद्ध इत्यत्र सर्वव्यापकार्थं नित्यव्यापकार्थं विष्णुपदं कथं प्रयुज्येत व्यापकत्वमहिमाप्राप्त्यर्थं त्रिविक्रमकरणमावश्यकमभूत् त्रिविक्रमोद्यम एव लोकानां चेतांसि हरति यदयं व्यापको हरिः। एवमत्र हरिपदमेवोपयुक्तम्।

शिवः

तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥[3]

शिव कल्याणं मङ्गलं विद्यतेऽस्य इति शिवः। श्यति अशुभमिति वा शिवः। शेरतेऽवतिष्ठन्ते अणिमादयोऽष्टौ सिद्धयोऽस्मिन्निति वा शिवः। प्रवृद्धाननचन्द्रकान्त्या कुमार्या प्रफुल्लचक्षुःकुमुदत्व प्रसन्नचेतःसलिलत्व वा कल्याणात्मकस्य शिवस्य स्वाभाविकमित्यत्र शिवशब्दोपादानमत्यन्तमुचितम्। एवमन्यत्रापि—

वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति कर्मसाक्षी।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥[4]

मुक्तविचारया त्वया शिवेन (कल्याणात्मकेन कल्याणपरेण वा) भर्त्रा

---

१. रघु० १३।१
२. कुमार० ६।७१
३. तत्रैव ७।७४
४. तत्रैव ७।८३

सह धर्मचर्या कार्येति वधूँ पार्वती प्रति द्विजवचने शिवपर्यायेषु शिवशब्दस्यौचित्य नितान्त संगच्छते। न कस्मिन्नपि धर्मकार्ये त्वया विचारणा कार्या, ते भर्ता स्वयं शिवः। शिवो यस्या भर्ता तस्याश्चिन्ता कुत इति 'शिवेन भर्त्रे'तिवचन साभिप्रायं विद्यते।

शम्भुः

भविष्यतः पत्युरुमा च शम्भो. समाससाद प्रतिहारभूमिम्।[१]

श मङ्गल भवत्यस्मादिति, श सुख भवति भावयतीति वा शम्भुः। भविष्यता पत्या शम्भुना मङ्गलहेतुना सुखकरेण भवितव्यमेवेत्यत्र शम्भुपदौचित्यं सिध्यति।

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम्।
वृणुते वरदः शम्भुरस्मत्सङ्क्रमितैः पदैः॥[२]

वरदः शम्भुस्ते दुहितरं वृणुते। सः वरदोऽपि शम्भावयिता शम्भुरपि किमन्यच्छ्रेयोऽपेक्ष्यते त्वयेति महर्षेरङ्गिरसः उपपत्तौ शम्भुपदे विशेषः।

उमा वधूर्भवान्दाता याचितार इमे वयम्।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः॥[३]

शम्भावयिता मङ्गलकारी शम्भुर्यदा वरस्तदा कुलोद्भूतिः सिद्धैवेत्यस्मिन् प्रसङ्गेऽपि शम्भुपदसङ्गतिः सिद्धा।

शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता[४]

न केवल तव पार्वत्या. एवाय शम्भावयिता सुखकरः, अपि तु ममापीति गौरीवक्त्रभृकुटिरचना विहस्येव गङ्गा शम्भोः केशग्रहणमकरोदित्यत्र शम्भुपदौचित्यम्।

हित्वा तस्मिन्भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी।[५]

भुजगवलयत्यागे शम्भोः सुखकरत्वमुपपन्नम्। तादृशेन सुखकरेण शम्भुना

१. कुमार० ३, ५८
२. तत्रैव ६.५८।
३. तत्रैव ६.८२
४. मेघ० १.५४
५. तत्रैव १।५४

दत्तहस्तया गौर्याः क्रीडार्थले पादाचारेण विचरणमुक्तम् । शम्भुपदस्यात्र प्रयोगो युज्यते ।

शर्वः

धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥[1]

शृणाति संहरतीति शर्वो यद्वा शर्वति हन्तीति शर्वस्ताद्दृशे संहारके शर्वे दारसंजिघृक्षालक्षणेन पार्वती प्रति पद कारिते सति पूर्वापराधभीतस्य कामस्य मनः समाश्वासमभूदित्यस्मिन्प्रसङ्गे शिवपर्यायेषु शर्वशब्दस्य महदौचित्यं विद्यते ।

शूली

जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंस ।[2]

शूलिपदेनात्र शिवस्य कठोरत्व सूच्यते । शूलप्रहरणेऽतो दुरासदेऽपि तस्मिन् कार्यसिद्धेराशंसा कामस्येति तस्य पराक्रम ध्वनयति ।

कुर्वन् संध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ।।[3]

शूलधारिणः शिवस्य सन्ध्याबलिपटहतया विधानेनाविकलफलप्राप्त्या शूलिनः प्रभावातिशयो द्योत्यते । शूलिपदे तथात्र विशेषः ।

शूलभृत्

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ।।[4]

महान्नियोगोऽयं मे यदहं शूलभृता वनद्विपानां त्रासार्थं व्यापारितः । शूलभृद् हि सः, तस्यादेशपालनं मे कर्तव्यमित्यत्र शूलभृत्पदेन शिवस्य शासकत्वं सूच्यते ।

स्थाणुः

गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम्[5]

---

१. कुमार० ६।१४
२. तत्रैव ३।५७
३. मेघ० १।३७
४. रघु० २।३८
५. कुमार० ३।१७

तिष्ठतीति स्थाणुः । तपस्यतः शिवस्य कृते स्थाणुपदं नितान्तमुपपन्नम् । स्थाणुवन्निश्चलो यस्मात्स्थितः स्थाणुरतः स्मृत इति पुराणेषु तथैव स्थाणुपदव्याख्या ।

स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥[१]

कामः सुतरां जानाति यत्सः स्थाणुरस्ति । कार्यमतीव कठिनमापतितम् । रत्यापि साशङ्कमनुप्रयातं । स्वाङ्गानामपि व्यापादाशङ्का वर्तत एवेत्यत्र स्थाणुपदेन सर्वं युज्यते ।

स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥[२]

इति विक्रमोर्वशीये नान्दीपाठे शिवपर्यायेषु स्थाणुपदमेवात्यन्तं संगच्छते । यः स्थाणुर्मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते सः स्थिरभक्तियोगेनैव सुलभः इत्येतादृशस्य शिवस्य कृते स्थाणुपदं विना किमन्यत्पदं युक्तं स्यात् ।

हरः

पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥[३]

हरतीति हरः, संहरति लोकान् प्रलय इति वा । संहारकेण हरेण पराजितोऽपि कामस्तौ शिरीषपुष्पाधिकसौकुमार्यौ गिरिजाभुजौ कण्ठपाशौ कृतवानित्यत्र शिवपर्यायेषु हरपदौचित्यम् । येन हरेण कामस्य प्राणा अपहृतास्तस्यैव हरस्य विजितेनापि कामेन यौ बाहू कण्ठपाशौ कृताविन्यत्र बाह्वोः कोमलातिशयत्वं द्योतयितुं हरशब्दे विशेषः ।

तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥[४]

यः सर्वान् हरति तस्यापि शिवस्य शरीरार्धं हृदयं वा इयं ते सुता हरिष्यतीति हिमालयं प्रति नारदसमादेशे हरपदं सर्वाधिकमुपपद्यते ।

कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥[५]

१. कुमार० ३।२३
२. विक्रमो० १।१
३. तत्रैव १।४१
४. कुमार० १।५०
५. तत्रैव ३।१०

यः सर्वसंहारकः सर्वान् वा हरति तस्यापि पिनाकपाणेर्धैर्यच्युतिमहं कुसुमायुधः कुर्यामित्यर्थे हरपदौचित्यम्। पिनाकपाणिपदोपादानमपि तथैव संगच्छते।

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसंख्यानपरो बभूव।[1]

यो हरोऽन्यान् हरति तस्य मनः साप्सरोगीतिः कथं हर्तुं शक्नुयादिति स हरिस्तस्मिन्क्षणे प्रसंख्यानपरः स्थित इत्यस्मिन्प्रसङ्गेऽपि हरपदे परिपाकः।

कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श॥[2]

वह्निमुखं प्रवेष्टुमिच्छुः शलभवत् स कामो हरे संहारके बद्धलक्ष्यः सन् धनुर्ज्यां परामृष्टवानित्यत्रापि हरपदप्रयोगे वैशिष्ट्यम्। अयमेव विशेषोऽन्येष्वपि स्थलेषु दृश्यते। यथा—

हरकोपानलभस्म केवलम्[3]
शलभत्वं हरलोचनार्चिषु[4]
हरचापस्य मनोभवद्रुमस्य[5]
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या[6]

अत्रापि हरपदे वैशिष्ट्यम्। बाह्योद्यानस्थ एव हरः स्वशिरश्चन्द्रिकया अलकाहर्म्याणि परिमृज्य तेषामन्धकारं हरति स्वहरणकर्मणा। एवमेव—

धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं[7]

इत्यत्रापि हरेणैव स्वशशिरुचा मयूरस्यापाङ्गं आमृष्टः, मालिन्यं हृत्वा शुक्लीकृतः। मयूरस्य स्वतः शुक्लापाङ्गत्वात् शुक्लता विवक्षिता मालिन्यहरणेन। एवं शिवस्य हरणकर्मत्वाद् हरपदौचित्यम्।

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यसि॥[8]

---

१. कुमार० ३.४०
२. तत्रैव ३।६४
३. तत्रैव ४,३
४. तत्रैव ४।४०
५. मेघ० १।७
६. तत्रैव १।४७
७. कुमार० ४।४२

संहारकस्य हरस्य प्रवणीकरणं न सरलं, स तु पार्वतीतपसा प्रवणीभविष्यते, तां पार्वतीं च तदा परिणेष्यति, तयोपलब्धमुखश्च स्मरं स्वेन वपुषा नियोजयिष्यतीत्यत्र हरपदोपपन्नत्वम् ।

ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ॥[१]

सर्वसन्तापहरत्वात् संहारकत्वाद्वा त्रैलोक्यवन्द्येन हरेण कृतप्रणामो भूमिधरो लज्जावानभूदित्यत्र हरशब्दौचित्यं सिद्धम् ।

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।[२]

यः सर्वहर्ता तस्यापि विलोचनं हृतमित्यत्र हरपदोपपत्तिः ।

तमसां निशि मूर्च्छतां निहन्त्रे हरचूडानिहितात्मने नमस्ते ॥[३]

संहारकस्यापि हरस्य चूडानिहितत्वात् त्वं श्रद्धेयोऽसि क्षपानाथेति पुरूरवस उक्तौ हरशब्दौचित्यं विद्यते ।

पिनाकी

न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥[४]

पिनाकमस्यास्तीति पिनाकी । पिनाकिन उग्ररुषत्वमुपपन्नमेव ।

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।[५]

मनोरथभङ्गः पिनाकिनैव शक्यते ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥[६]

पिनाकिपदौचित्यमत्र स्पष्टमेव।

महोग्रमारुह्य महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥[७]

युद्धे बाणप्रहारप्रसङ्गे पिनाकिपदं नितान्तसङ्गतं विद्यते ।

---

१. कुमार० ७।५४
२. तत्रैव ८।७२
३. विक्रम० ३।७
४. कुमार० ४।२४
५. तत्रैव ५।१
६. शाकु० १।६
७. रघु० ६।७२

पिनाकपाणिः

कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽपि ।[1]

कुसुमायुधोऽप्यहं पिनाकपाणेर्धैर्यच्युतिं कुर्यामित्यत्र पिनाकपाणिपदे विशेषः । पिनाकपाणिरिति साभिप्रायं विशेषणं पिनाकपाणेर्हरस्य ।

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥[2]

वटुवेशधारिणं शिवं पार्वतीतपश्चर्याकारणं प्रत्युक्तवत्या सख्या प्रयुक्तेन पिनाकपाणिपदेनात्र शिवस्य दार्ढ्यं कठोरत्वं च सूच्यते ।

भवः

अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥[3]

भवत्यस्मात्सर्वं स भवः शिवः तस्य पत्नी अवमानं कथं सहेत । पित्रा कृतमपमानमसहमाना सा सती योगेन देहं विसृष्टवतीत्यत्र भवशब्दप्रयोगो युक्तियुक्तः ।

अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।
स च स्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥[4]

शिववीर्यस्यामोघामुत्पादकशक्तिं प्रकटयितुमत्र भवपदमुपात्तं कविना । भव एव विजेतारं सेनानीमुत्पादयितुमर्हः इत्यत्र भवशब्दे विशेषः ।

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥[5]

मदनं भस्मावशेषं कारयितुर्वह्नेर्जन्म भवस्य नेत्रादभूदित्यत्रापि भवपदौचित्यम् । यद्यप्याचार्यवर्याः क्षेमेन्द्रपादाः[6] स्वकीयायामौचित्यविचारचर्चाया

---

१. कुमार० ३।१०
२. तत्रैव ५।५३
३. तत्रैव० १।२
४. तत्रैव ३.१५
५. तत्रैव ३. ७२
६. औचित्यविचारचर्चा कारिका २८ (वृत्तिः)

नामौचित्यप्रसङ्गे प्रकृतं श्लोकमुदाहरन्तः रुद्रस्यात्र भवाभिधानेऽनौचित्यं दर्शयन्ति । श्रीमन्तो वासुदेवविष्णुमिराशीमहाभागाश्चैनं दोषं समर्थयन्ति ।[1] एतैराचार्यवर्यैर्दर्शितदोषस्य निराकरणं तु धाष्ट्यमेव तथापि वह्नेः प्रभवहेतोर्भवपदं कथं न युक्तमिति विचारणीयम् । वागीश्वरविद्यालङ्कारमहाभागास्त्वत्र भवपदस्य युक्तत्वं निर्दिशन्ति ।[2]

तावद् भवस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पुरशासनस्य ॥[3]

सर्वमस्माद्भवतीति भवस्तस्यापि पुरस्तात्प्रसाधनं न्यस्तमित्येतत्सर्वं भवस्य कृते उपचारमात्रं सोऽपि तासु मातृत्वादरात् तत्प्रसाधनं केवलं स्पृष्टवान् । भवस्य तस्य किमप्राप्यं तस्य वेष एवेष्टमङ्गरागादिरूपत्वमाप । एवमत्र भवशब्दस्य नितान्तमुपपन्नत्वं विद्यते ।

रुद्रः

इमामनूनं सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥[4]

रोदयतीति रुद्रः । रुद्रस्योजसा सामर्थ्येन प्रहृतमन्यथा त्वमस्या प्रहर्तुं नार्हः । ओजो रुद्रे युज्यत एवमत्र रुद्रपदे परिपाकः ।

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।[5]

इत्यत्रापि रुद्रशब्दे पूर्णौचित्यं वर्तते । रुद्रसंरम्भेण भीतिः सम्भावनीयैव । यो रोदयति तस्मात्कथं न भीतिः स्यादित्यत्र रुद्रशब्दे विशेषः ।

रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।[6]

अर्धनारीश्वरेण रुद्रेण नाट्यं स्वाङ्गे लास्यताण्डवभेदयोर्द्विधा विभक्तं ताण्डवं च रुद्रेणैव क्रियत इत्यत्रापि रुद्रपदोपपन्नत्वम् ।

---

१. कालिदास—मिराशी, पृ० २५३
२. कालिदास और उसकी काव्यकला, पृ० २७४
३. कुमार० ७।३०
४. रघु० २।५४
५. कुमार० ३।७६
६. माल० १।४

त्र्यम्बकः

जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥[1]

वीक्षणे प्रभूतप्रभावत्त्वं ज्ञापयितुमत्र शिवपर्यायेषु त्र्यम्बकपदप्रयोगो युक्तः ।

महेश्वरस्त्र्यम्बक एव नापरः[2]

अत्रापि त्र्यम्बकपदं शिवस्य प्रभावातिशय द्योतयितुं प्रयुक्तम् अतः खलु स एव महेश्वरो नापरः ।

आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥[3]

त्रियम्बकेति कवेरार्षप्रयोगः । अत्राप्यद्वितीयसामर्थ्यवतः संयमिनः शिवस्य कृते त्रियम्बकपदेऽत्यन्तमौचित्यं विद्यते ।

शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥[4]

पर्वतो राशीभूतोऽट्टहास इत्युत्प्रेक्षितं कविना । स च न यस्य कस्यापि प्राकृतजनस्यापि तु त्र्यम्बकस्य त्रिनयनस्य देवस्य, अत एव तस्य तादृशं व्यापकस्वरूपं यत्तस्य पर्वतरूपेण परिणतिः ।

चण्डीश्वरः

पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।[5]

अत्र प्रयुक्तश्चण्डीश्वरेति शब्दः सार्थकः । सहजकोपनशीलां देवीं चण्डीमत्र महाकालो भगवान् शिवः तपश्चर्यया प्रसादयामासेति प्रसिद्धम् ।

पशुपतिः

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।[6]

पशूनां जीवानां पतिः । तिर्यग्जातौ पशुः प्रोक्तः सर्वप्राणिषु पुंस्ययम् इत्यमरोक्त्या । इच्छापि जीवसामान्यधर्मस्तस्मादेव पशुपतेरपि पार्वतीसमा-

---

1. रघु० ५.२२
२. तत्रैव ३।४६
३. कुमार ३।४४
४. मेघ० १.६२
५. तत्रैव १।३७
६. कुमार० ६।६५

गमोत्सुक्य विद्यत इत्यत्र पशुपतिशब्दे विशेषः । अयमेव भावो मेघदूतीयेऽस्मिन्-पद्ये स्पष्टीकृत ।

नृत्यारम्भे हरपशुपतेरार्द्रनागाजिनेच्छाम् ।[1]

पशुपतेर्गजाजिनेच्छा स्वाभाविकी तेनात्र पशुपतिपदमत्यन्त समीचीनम् ।

नीललोहितः

संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥[2]

अपि च—

ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥[3]

इत्युभयत्र नीललोहितपदवैशिष्ट्यम् । विषपाने यो समर्थस्तस्य वीर्यांशादृते कस्त प्रसहेत । नीललोहित एव परिगतशक्तित्वात्पुनर्भवं क्षपयितु समर्थ इति नीललोहितपदौचित्यम् ।

ब्रह्मा

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥[4]

अत्र ब्राह्ममुहूर्तसम्बन्धाद् ब्रह्मपदोपपत्तिः ।

तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥[5]

बृहति वर्धत इति ब्रह्मा । प्रवृद्धो दीधितिमान् सूर्यो यथा सुप्तपद्मानां सरसां श्रिय वर्धयते तथैव तेषा देवाना परिम्लाना मुखश्रियं प्रवर्धयितु वर्धनशीलो ब्रह्मा प्रादुरभूदित्यत्र ब्रह्मपदौचित्यम् ।

वेधाः

तं वेधा विदधे नूनं महाभूतसमाधिना ।[6]

---

१. मेघ० १।४०
२. कुमार० २।५७
३. शाकु० ७।३५
४. रघु० ५।३६
५. कुमार० २।२
६. रघु० १।२९

विदधातीति वेधाः। तेन वेधसा महाभूतसमाधिना दिलीपस्य विधानं युक्तियुक्तम्। वेधा विदध इत्यत्र सयोजनसङ्गतिरपि।

नूनमात्मसदृशी प्रकल्पिता वेधसा हि गुणदोषयोर्गतिः।[१]

इत्यत्रापि प्रकल्पनाविधौ वेधस्पदोपादानम्।

पितामहः

प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥[२]

प्रजानां पित्रोः शिवपार्वत्योः पितामहाय ब्रह्मणे प्रणतिर्युज्यते। पितामह-पदमत्र सङ्गतम्।

प्रजापतिः

प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥[३]

हिमवते शैलाधिपत्यप्रदाने प्रजापतिरेव समर्थः प्रजानामुपरि तस्य पूर्णाधिकारत्वाद् यथेच्छसाधनसम्प्रदानत्वाच्च।

अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः।[४]

प्रजोत्पत्तिकाले स्वप्रजाया सरस्वत्यामभिलाषकरणे प्रजापतिपदोपादानमौचित्यसूचकम्।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः[५]

य प्रजानां पतिः स एवास्या उत्पत्तिक्रमे चन्द्रोऽभवदित्यनयोर्वश्याः सौन्दर्यातिशयत्वं प्रजापतिपदेन ध्वन्यते।

इन्द्रः

नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥[६]

य इन्दति परमैश्वर्यवान् भवति स इन्द्रः। परमैश्वर्यवत इन्द्रस्यापि येन शङ्का जनिता स नूनं महान्। उग्रतपसो महर्षेः प्रभावाधिक्यं द्योतयितुमत्रेन्द्रपदोपपन्नत्वम्।

१. कुमार० ८।६६
२. तत्रैव ७।८६
३. तत्रैव २।१७
४. तत्रैव १।१०
५. विक्रमो० १।१०
६. रघु० १३।४२

ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ।[१]

परमैश्वर्यवत इन्द्रस्य हस्तेन स्पर्शमात्र कामाय आशीर्वचनमिवासीत् । इन्द्रपदमत्रापि परमैश्वर्यवत्ता सूचयति ।

आखण्डलः

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।[२]

आ समन्तात् खण्डयतीत्याखण्डलः आखण्डलविक्रममपि योऽतिक्रान्तः स रघुः कीदृशः पराक्रमी स्यादित्यत्र रघोर्विक्रमातिशयत्वं व्यापयितुमाखण्डलपदप्रयोगः ।

वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।[३]

धनुःखण्डमाखण्डलस्य यथा सङ्गच्छते न तथेन्द्रस्य वासवस्य वा ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीसदृशी भव ॥[४]

देवकार्यं सम्पाद्यागतस्य दुष्यन्तस्याखण्डलेन साम्यमत्यन्तमुपपन्नम् ।

गोत्रभित्

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।[५]

गोत्रं पर्वतं भिनत्तीति गोत्रभित् । महीध्राः पर्वताः गोत्रभिदा पर्वतानां भेत्रा आत्तगन्धा हृतगर्वाः शरण्यमेन सागरमाश्रयन्त इत्यस्मिन्प्रसङ्गे गोत्रभित्पदं [redacted] नितान्तमुचितम् ।

तुराषाट्

समभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥[६]

तुरं वेगं सहत इति तुराषाड् यद्वा तुरं वेगं साहयति अभिभवतीति तुराषाड् । वामनरूपधारिणो विष्णोरग्रजः तुराषाडिह कथितः । वामनः त्रिवि-

१. कुमार० ३।२२
२. रघु० ४।८३
३. मेघ० १।१५
४. शाकु० ७।२८
५. रघु० १३।७
६. तत्रैव १५।४०

क्रमस्तस्याग्रजेन तुरासाहा भवितव्यमेवेत्यत्र तुरासाहृपदमत्यन्तं संगच्छते ।

तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥[1]

स्वायम्भुवधामगमने तुरासाहः पुरस्करणमुपपद्यते । तुरासाडितिपदमत्र युज्यते।

वज्रपाणिः

जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥[2]

वज्रं मुमुक्षन् वज्रपाणिर्जडीकृतः। वज्रं तस्य पाणावेव रुद्धम् इत्यत्र वज्रपाणिपदप्रयोगः समीचीनः ।

विडौजाः

रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्विडौजसः ।[3]

विडति भिनत्ति रिपून् इति विड् (भेदने तुदादिः) (इगुपधज्ञाप्रीकिरः कः, पा० ३.१.१३५) कप्रत्यये विडं भेदकमित्यर्थः । विड भेदकमोजो यस्य स विडौजास्तादृशस्याद्वितीयबलयुतोऽपि शरासनज्यां स्वपत्रिणा रघुरलुनादित्यत्र रघोर्बलातिशयत्व सूचयितु विडौजस्पदप्रयोगौचित्यम् ।

विडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ।[4]

विडौजसा भ्रात्रा वामनरूपधारिणो विष्णोः परवत्ता युक्तियुक्ता । यथा विडौजसा महृपराक्रमशालिनेन्द्रेण विष्णुरपि परवाननुजत्वात्तथैवाग्रजेन भ्रात्रा रामेण त्वं परवानसीत्यत्र विडौजसा सादृश्याद्रामस्य प्रभूतपराक्रमत्वं ध्वन्यते विडौजस्पदौचित्य च लक्षित भवति ।

तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु[5]

भेदकेनौजसैवेन्द्रः मेघान् भित्त्वा प्रजासु प्राज्यवृष्टिर्भवितुमर्हतीत्यत्र विडौजस्पदे परिपाकः । त्वमपि विततयज्ञः वज्रिणं प्रीणायस्वेत्यग्रिमायां पङ्क्त्यां वज्रिनितिपदमिन्द्राय युज्यते । प्रीणनं वज्रिण आवश्यक नो चेत्क्रुद्धो भविष्यतीति वज्रिनितिपदेन ध्वन्यते ।

१. कुमार० २।१
२. रघु० २।४२
३. तत्रैव ३।५६
४. तत्रैव १४।५६
५. शाकु० ७।३४

कुबेरः

गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥[१]

कुम्बत्याच्छादयति धनमैश्वर्यं वेति कुबेरः। पृथिवीं धनरहितां दृष्ट्वा रघुः कुबेराद् धनमाप्तुमैच्छत्। यः कुबेरो धनमाच्छाद्य स्थितस्तस्मात् धनं प्राप्स्याम्येवेत्यत्र कुबेरपदौचित्यम्।

एवञ्च

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।[२]

भासुरहेमराशिः कुबेराद् धनाच्छादयितुरेव लब्धुं शक्यत इत्यत्रापि कुबेरपदोपादानम्।

पूर्वापेक्षी तदनु विदधे कोषवृद्धिं कुबेरः।[३]

कुबेर एव कोषवृद्धिं विधातुं शक्नोतीत्यत्र कुबेरशब्दप्रयोगः।

कैलासनाथः

सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः।[४]

न तु केवलं कैलासनाथोऽहं पुनर्भूपतिरिति सामन्तसम्भावनयैव कुबेरं बलेन जेतुमिच्छुः स रघुः कल्पितशस्त्रगर्भं रथमधिशिश्ये। कुबेरस्य कृते कैलासनाथेतिपदप्रयोगः साभिप्रायः।

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री कैलासनाथमनुसृत्य निवर्तमाना।[५]

कैलासनाथमनुसृत्य निवर्तमाना इति वचसा कैलासान्निवर्तनमपि स्पष्टं भवतीत्यत्र कैलासनाथपदमुपपन्नम्।

राजराजः

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो-
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ।[६]

राजराजस्यानुचर इति कुबेरस्थाने राजराजपदोपादानेन यक्षस्य महासुख-

---

१. रघु० ५।२३
२. तत्रैव ५।३०
३. तत्रैव १७।८१
४. तत्रैव ५।२८
५. विक्रमो० १।४
६. मेघ० १।३

विलासित्वं ध्वनितं तेन च विरहस्य दुःसहत्वमतो राजराजपदे विशेषः।

धनदः

> ऋत्विजः स तथानर्च दक्षिणाभिर्महाक्रतौ।
> यथा साधारणीभूतं नामास्य धनदस्य च ॥[1]

महाराजोऽतिथिर्दक्षिणाभिः प्रचुरं धनम् ऋत्विग्भ्योऽदात् तेनैवास्य धनदस्य च नाम साधारणीभूतम्। कुबेरस्य कृते धनपदं यथा युज्यते न तथाऽन्यपदम्।

स्कन्दः

> तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
> पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः।
> रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
> मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥[2]

स्कन्दति स्कन्दते उत्प्लुत्य गच्छति, स्कन्दति शोषयति दैत्यान् वा[3]। इत्यादित्यं तत्तेजो वासवीनां चमूनां रक्षार्थं हुतवहमुखे सम्भृतमिति कार्त्तिकेयकृते स्कन्दपदमत्र नितान्तमुपयुक्तम्। रामायणमहाभारतादिषु स्कन्दपदव्युत्पत्तिरेव तथा वर्णिता।[4]

कुमारः

> हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ।
> भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥[5]

---

१. रघु० १७।८०

२. मेघ० १।४७

३. द्रा० क० द्रु०, पञ्चमः काण्डः, पृ० ४२८

४. स्कन्द इत्यब्रुवन् देवाः स्कन्नं गर्भपरिस्रवात्। रा० १।१७।२८

तत्स्कन्नं तेजसा तत्र संवृतं जनयत्सुतम्।
ऋषिभिः पूजितं स्कन्नमनयत् स्कन्दतां ततः ॥

महा० वन० २२५.१६-१७

स्कन्नत्वात्स्कन्दतां चापि गुहावासाद् गुहोऽभवत्।

तत्रैव, अनु० ५.८२

५. रघु० ३।५५

कुमाररघ्वर्थमुपमानरूपेण प्रयुज्यमाने कुमारपदे औचित्यं प्रत्यक्षमेव ।

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।[1]

इत्यत्रापि स्कन्दार्थे कुमारपदप्रयोगोऽत्यन्त सङ्गतः ।

पुरा भगवता कुमारेण शाश्वत कुमारव्रत गृहीत्वाकलुषो नाम गन्धमादन-कच्छोऽध्यासितः ।[2]

अत्रापि कुमारपदमेव सङ्गच्छते ।

**अपर्णा**

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयापि तप्तम् ।[3]

दुश्चरं तपस्तपने पार्वतीकृतेऽपर्णेतिपदं नितान्तमुपपन्नम् । कविना स्वयमेवास्य पदस्य निर्वचन प्राक् कृतम् । यथा—

स्वयं विशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदा
वदन्त्यपर्णेति च तां पुराविदः ॥[4]

**अम्बिका**

आशीर्भिरेधयामासुः पुरः पाकाभिरम्बिकाम् ॥[5]

अम्ब्यते स्नेहेनोपगम्यत इत्यम्बा । अम्बा एव अम्बिका स्वार्थे, कन्प्रत्ययः । अम्बिकाया. पुर' पाकाभिराशीर्भिः संवर्धनं युज्यते । अम्बिकापदे चैव विशेषः ।

**गौरी**

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।[6]

ताम्ररुक् करः गौरवर्णाया गौर्या एवोपपद्यते । तेनैवात्र पार्वतीपर्यायेषु गौरीपदोपपत्तिः ।

---

१. रघु० ५।३६
२. विक्रमो० ४।७२।७३
३. कुमार० ७।६५
४. तत्रैव ५।२८
५ तत्रैव ६।९०
६. तत्रैव ३।६५

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ॥[1]

अत्रापि गौरीपदमेव सर्वाधिकं युज्यते ।

श्रीः

उपात्तविद्यं विधिवद् गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषाऽपि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥[2]

श्रयति श्रयते वा नीतिज्ञमुद्योगिनं वा सा श्रीः । गुरुभ्यो विधिवदुपात्तविद्यस्य यौवनोद्भेदविशेषकान्तस्याजस्य श्रियः लक्ष्म्याः श्रयणाभिलापरत्वं युक्तियुक्तम् । श्रीपदञ्चात्र साभिप्रायम् । एवञ्च—

लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत् ।[3]

श्रिया ईप्सितः श्रयितुमभिलषितः कथं तया दुरापो भवेदित्यत्रापि श्रीपदप्रयोगे महदौचित्यं विद्यते ।

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
सङ्गतं श्रीसरस्वत्योर्भूतयेऽस्तु सदा सताम् ॥[4]

संश्रयप्रसङ्गे श्रीपदमत्यन्तमुपयुक्तम् ।

पद्मा

पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ।[5]

पद्मातपत्रेण सेवनं पद्मयैव युज्यते न तु लक्ष्म्या मेव श्रिया। तेनात्र पद्मेति पदप्रयोग एव साधुः ।

लक्ष्मीः

लक्ष्मीविनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥[6]

१. कुमार० ७।९५
२. रघु० ५।३५
३. शाकु० ३।१२
४. विक्रमो० ५।२४
५. रघु० ४।५
६. तत्रैव ५।६७

लक्षयति पश्यति उद्योगिनमिति लक्ष्मीः। त्वदाननसादृश्याद् य लक्षयन्ती सती लक्ष्मीः आत्मानं विनोदयति सोऽपि चन्द्रः पश्चिमाशां गतः, कमधुना सा लक्षयेद् विनोदार्थमतस्त्वं निद्रां विहाय स्वमुखं तस्यै दर्शय तां परिगृहाणेति भावः। अत्र प्रयुक्तं लक्ष्मीपदमतीवोपपन्नम्।

(ख) प्रकृतिवर्गः

चन्द्रः

> तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः।
> प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमालिः॥[1]

चन्दयति आह्लादयति चन्द्रति दीप्यतीति वा चन्द्रः ऊर्मिमालिर्यथा चन्द्रमाह्लादकं प्रवृद्धोर्मिः प्रत्युद्गच्छति तथैव अजागमनेनारूढो गुरुः प्रहर्षं आह्लादो यस्य स विदर्भराजः अजं प्रत्युज्जगामेत्यत्राह्लादनार्थे प्रयुक्तं चन्द्रपदमप्यत्यन्तमुपयुक्तम्।

कविना चन्द्रपदस्य निर्वचनं तथा कृतम्—

> यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।[2]

> निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी॥[3]

आह्लादके चन्द्रे हृते यथा कौमुद्याः कौमुदीत्वं [कौ पृथिव्यां मोदन्ते जना यस्यां तेनासौ कौमुदी मता।] न विद्यते सा प्रनष्टा भवति तथैव सा इन्दुमती विनष्टा। अत्रापि चन्द्रपदप्रयोगवैशिष्ट्यम्।

> चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।[4]

चान्द्रमसीमभिख्यां शोभाम् 'अभिख्या नामशोभयोः' इत्यमरः। अमृतसदानन्दिनी न भुङ्क्ते इति मल्लिनाथपादा अप्यत्र अभिख्यायामाह्लादकत्वमपेक्षन्ते। चन्द्रपदमवमत्रापि युज्यते।

> नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥[5]

---

१. रघु० ५।६१
२. तत्रैव ३।१२
३. तत्रैव ८।३७
४. कुमार० १।४३
५. तत्रैव १।६०

चन्द्रस्याह्लादकस्य पादैरंशुभिर्नियमितखेदा निर्वर्तितपरिश्रमा सतीत्यत्रापि चन्द्रपदेनाह्लादकत्वध्वनिः।

आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥[1]

आह्लादकत्वं चन्द्रस्यात्र स्पष्टमेव कथितम्। यथा चन्द्र आह्लादकः स्वकरैश्चन्द्रकान्तमाह्लादयति तथैव पुत्र! त्वमपि मां स्वस्पर्शेनाह्लादयस्वेत्यत्र चन्द्रशब्दे परिपाकः।
एवञ्च मेघदूतेऽपि—

त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥[2]

आह्लादकपादैः रश्मिभिश्चन्द्रकान्ता आह्लादककान्ता मणयः स्फुटजललवस्यन्दिनो भवन्ति। एवमत्र चन्द्रपदे विशेषः।

नेत्रोत्सवो हृदयहारिमरीचिमालः प्रह्लादकः शिशिरसीकरवारिवर्षी।
पत्युर्वियोगविषदग्धशरक्षतानां चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥[3]

प्रह्लादकश्चन्द्रोऽपि पत्युर्वियोगेऽङ्गनानां तनुमतितरां दहतीत्यत्र चन्द्रपदमेव युज्यते।

इन्दुः

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥[4]

उनत्ति क्लेदयति अमृतधारया भुवं क्लिन्नां करोतीति इन्दुः। क्षीरनिधौ क्लेदनकर्मणि अमृतवर्षक इन्दुरिव राजेन्दुर्दिलीपस्तदन्वये प्रसूतः। क्षीरनिधिसम्बन्धादिन्दोः क्लेदनकर्मत्वं सुतरां युज्यते। इन्दुक्षीरनिध्योर्जन्यजनकभावश्चान्यत्रापि सौन्दर्येण प्रस्तुतो यथा—

---

१. विक्रमो० ५।११
२. मेघ० २।६
३. ऋतु० ३।६
४. रघु० १।१२

महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥[1]
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥[2]

क्लेदनकर्मणा इन्दोः किरणेष्वङ्कस्य निमज्जनं युज्यते । इन्दुपदमेवमत्रापि नितान्तमुपयुक्तम् ।

तावत्पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वञ्ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥[3]

ज्योत्स्नाभिषेकेण द्विगुणद्युतिकरणमिन्दुनैवोपपद्यते तेनैवात्रेन्दुमौलिपदं न्यधायि कविना ।

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ॥[4]

इन्दोः क्लेदनस्वभावात् शीतरश्मित्वात् पूर्वप्रीत्या विरहिण्या यक्षिण्या उष्णाश्रुसम्भृतेन चक्षुषा इन्दोरमृतशिशिरान् पादान् प्रति गमनं समीचीनमेव । इन्दुपदमत्रापि सर्वाधिकमुपपन्नम् ।

शशी

वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।[5]

शशिनि वक्त्रच्छायामुत्पश्यति यक्षः । तस्मिन्नपि तस्याः सादृश्यं नास्ति । कलङ्कं स्मारयितुमत्र कविना युक्तमिदं पदं न्यधायि । चन्द्रमसः पूर्णत्वे एव मुखसादृश्यलाभादस्थिरत्वम् । तदानीञ्च स्फुटविकटकलङ्कपङ्काङ्कतया तत्सामग्र्या विरहो ध्वन्यते ।' इति पूर्णसरस्वतीपादा अपि ।

सन्नद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥[6]

१. तत्रैव ३।१७
२. कुमार० १।३
३. तत्रैव ७।६३
४. मेघ० २।३२
५. तत्रैव २।४६
६. कुमार० ७।१६

अत्रापि गौरीमुखात् परिभवे शशिपदमेव सर्वाधिकमुपपन्नम् ।

छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥[1]

प्रजाभिर्भूमेश्छाया निर्मलस्य शशिनः कलङ्कत्वेनारोपितेत्यर्थे चन्द्रवृत्तेऽस्मिन् प्रसङ्गे शशिपदमत्यन्तं संगच्छते ।

रोहिणीपतिः

अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥[2]

साभिप्रायमत्र चन्द्रस्थाने रोहिणीपतिपदं प्रयुक्तम् । 'रोहिणीग्रहणसामर्थ्यादिन्दोरप्यत्रारोहणे रोहिणीसाहित्यमनुसन्धेयम्' इति मल्लिनाथपादा अप्यत्र रोहिणीपतिपदे वैशिष्ट्यं सङ्केतयन्ति ।

द्विजराजः

इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥[3]

द्विजराजपदेनात्र सयोजनसङ्गतिस्तु विद्यत एव, महत्तरमौचित्यमपि सूच्यते 'सोमो राजा ब्राह्मणानाम्, इति श्रुतेः चन्द्रो द्विजानां राजा । द्विजस्य गृहे यथा निर्धनता विद्यते तथैव द्विजराजस्य चन्द्रस्य बिम्बे स्वप्रकाशो नास्ति स तु द्विजवद् अन्यं सूर्यमेव प्रकाशं याचते तस्माच्च प्रकाशं गृहीत्वा रात्रौ तस्मै प्रतियच्छति । द्विजस्यापि कुतो धनम् सोऽपि नृपादिभ्यो धनं प्राप्य स्वकुटुम्बं पोषयति । द्विजराजजातित्वादत्र रघुरपि धनरहितः तस्यापि स्वं धनं न विद्यते विश्वजिन्नाम्नि यज्ञे निःशेषविश्राणितकोषत्वाद् । अतः सोऽपि परमेव याचित्वा कौत्साय धनं दातुं शक्तः । एवमत्र द्विजराजपदं चन्द्रपर्यायेषु नितान्तमुचितम् । 'द्विजराजकान्तिरित्यनेनार्थावाप्तिर्वैराग्यं वारयती' ति मल्लिनाथपादा अपि ।

सोमः

तस्मौरसः सोमसुतः सुतोऽभून्नेत्रोत्सवः सोम इव द्वितीयः ॥[4]

---

१. रघु० १४।४०
२. कुमार० ८।८२
३. रघु० ५।२३
४. तत्रैव १८।२७

चन्द्रपर्यायेष्वत्र सोमपदमेवात्यधिकं संगच्छते । सोमसुतस्तस्य हिरण्यनाभस्य सोम इव नेत्रोत्सव. पुत्रोऽभूदित्यत्र सोमपदौचित्यम् ।

सूर्यः

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।[१]

सरतीति सूर्यः । सरणशीलः सूर्य. प्रभवो यस्य तस्य वंशस्यापि महान् प्रसारः विस्तारः तमल्पविषया मतिः कथं ततुं शक्नोतीत्यत्र सूर्यशब्दे परिपाकः ।

विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥[२]

कुञ्जरकर्णतालैर्विस्तारितो रेणुः सूर्यमुपरुरोध । उपरोधः सरणशीलस्य सूर्यस्यैव युज्यते । तेनात्र सूर्यपदोपादानम् ।

विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥[3]

अस्ताचले निमज्जनं सूर्यस्यैवोपपद्यते सरणशीलत्वादतोऽस्मिन् प्रसङ्गे सूर्यपदोपपत्तिः ।

विरराजोदिते सूर्ये मेरौ कल्पतरोरिव ॥[४]

उदयनं सरणशीलस्य सूर्यस्यैव युज्यते । प्रायेण कविरुदयनविषये सूर्यपदमेव प्रयुङ्क्ते । यथा हि—

प्रजाः स्वतन्त्रयाञ्चक्रे शश्वत्सूर्य इवोदितः ॥[५]

एषा सूर्योदय एव शिखामज्जिता[६]

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।[७]

दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषम्[८]

---

१. रघु० १।२
२. तत्रैव ७।३९
३. तत्रैव १६।११
४. तत्रैव १७।२६
५. तत्रैव १७।७४
६. शाकु० ४।४।५
७. माल० ४।७
८. मघ० १।४२

सरणशीले सूर्ये दृष्टे सति भवानप्यध्वशेषं वाहयेत्, त्वमपि सरणशीलो भवेत्यर्थः। एवमत्रापि सूर्यपदौचित्यम्।

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्[1]

यः सरति तस्यैवापायः सम्भवो नान्यस्य।

सप्तसप्तिः

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः॥[2]

सप्तसप्तिः सप्ताश्वः। सप्तसप्तिपदेनात्र सूर्यस्य प्रचण्डातपत्वं सूच्यते। ललाटन्तपसप्तसप्तिस्तपस्वी सुतीक्ष्णं उग्रं तपस्तपस्यतीति भावः। एवञ्च—

सर्वैरस्त्रैः समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः॥[3]

सप्तसप्तिः प्रचण्डातपवान् सूर्यः समग्रैर्नृपगुणैस्त्वमिव सर्वैः किरणैर्दीप्यत इत्यत्रापि सप्तसप्तिपदेन पूर्णातपत्वं सूर्यस्य लक्ष्यते।

उच्छेत्तुं प्रभवति यन्न सप्तसप्तिस्तन्नैशं तिमिरमपाकरोति चन्द्रः॥[4]

पूर्णप्रतापवान् सप्तसप्तिरपि यन्नैशमन्धकारमुच्छेत्तुं न प्रभवति तं चन्द्र एवापाकरोतीत्यत्रापि सप्तसप्तिशब्दस्य स एवाभिप्रायः।

पतङ्गः

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥[5]

पतन् गच्छतीति पतङ्गः सूर्यः। पतङ्गस्य प्रभा दिनान्ते निलयाय गन्तुं प्रचक्रम इत्यत्र सूर्यपर्यायेषु पतङ्गपदमत्यन्त समीचीनम्। सायं हि सूर्यस्तथैव *पतन्निव दृश्यते। पतङ्गस्य प्रभाऽपि तस्मादुत्प्लवमानेव निलयाय गच्छति* शीघ्रतया संव्रियमाणा पतङ्गेन तेनात्र पतङ्ग इति पदमेवोपपन्नम्। पतङ्गशब्दोऽत्र पक्षिणमपि कदाचिद् ध्वनयेत्। पक्षिणोऽपि दिनान्ते निलयाय गच्छन्ति।

---

१. मेघ० २।२०
२. रघु० १३।४१
३. माल० २।१२
४. शाकु० ६।३०
५. रघु० २।१५

जातवेदस्

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियाम्[१]

जातं जातं वेत्तीति जातवेदा अग्निः। यो जातं सर्वं वेत्ति तस्मिन् या विशुद्धा तस्या शुद्धौ न कोऽपि सन्देह इत्यत्र जातवेदस्पदेन ध्वन्यते। अयमेव भावोऽन्यत्रापि यथा—

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः॥[२]

इत्यत्रापि जातवेदस्पदमेवाग्निपर्यायेषु कवेरभीष्टम्। या जातवेदसि नः समक्षं शुद्धा तस्यामश्रद्धाया. प्रश्न एव नोद्गच्छति इत्यत्र जातवेदस्पदे विशेषः।

ज्वलनः

कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति॥[३]

ज्वलतीति ज्वलनः। इन्धनेद्धोऽग्निर्ज्वलन एव भवतीत्यत्राग्निपर्यायेषु ज्वलनपदमेव सर्वाधिकं युज्यते।

कृष्णगतिः

आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम्।
धारां शितां रामपरश्वधस्य सम्भावयत्युत्पलपत्रसाराम्॥[४]

प्रतीपो राजा कृष्णगतिमग्निं सहायकं प्राप्य क्षत्रियकालरात्रिं जामदग्न्यपरशुधारामुत्पलपत्रसारां सम्भावयति। अत्र क्षत्रियकालरात्रिमतिक्रान्तुं कृष्णगतिपदमत्यन्तमुपयुज्यते।

धूमकेतनः

निष्प्रभश्च रिपुरास भूभृतां धूमशेष इव धूमकेतनः॥[५]

परशुरामः धूमशेषो धूमकेतन इव निष्प्रभोऽभूदित्यत्र धूमावशिष्टाग्नि-

---

१. रघु० १२।१०४
२. तत्रैव १५।७२
३. तत्रैव ९।८०
४. तत्रैव ६।४२
५. तत्रैव ११।८१

विषये धूमकेतनपदादन्यत्किं पदमुपयुक्तं स्यात् । नान्यदिति धूमकेतनपदे वैशिष्ट्यम् ।

हिरण्यरेताः

अंशे हिरण्याक्षरिपोः स जाते हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ॥[१]

अग्निवाचकहिरण्यरेतस्पदमेवात्र सर्वाधिकं संयुज्यते 'हिरण्याक्षरिपोः' 'हिरण्यनाभ' इत्येतयोः पदयोः संयोजनसङ्गतित्वात् ।

विभावसुः

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥[२]

विभा प्रभा तेज एव वसु धनं यस्य स विभावसुरग्निः । सहायभूतेन वायुनाग्नेर्विभावसुत्वं, प्रदीप्तत्वात् सारथत्व विभावसुर्दुःसहो भवति । अत्र प्रयुक्तं विभावसुपदमति समीचीनम् । एवमेवात्रापि —

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥[३]

वायुसाहाय्येनाग्निविभावसुत्वमाप्नोति चन्द्रवृद्धौ चाह्लादितो रत्नाकरोऽपि समुच्छलति । एवमत्र विभावसुचन्द्रसमुद्रेत्येतेषां सर्वेषां पदानामौचित्य विद्यते ।

गगनम्

प्रवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥[४]

गच्छन्त्यनेनास्मिन्वेति गगनम् । गगनस्पृशेति कथने गगनपदप्रयोगोऽत्यन्त सङ्गतः । स्पर्शस्तु गमनेनैव सम्भाव्यते । स्वरो गगनपर्यन्त गच्छतीति भावः । आकाशार्थमत्र गगनपदमेव युज्यते ।

---

१. रघु० १८।२५
२. तत्रैव ३.३७
३. तत्रैव १०।८२
४. तत्रैव ३।४३

गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥[1]

अश्वखुरोद्धता रेणवो गगनं गतास्तच्चाच्छाद्य वितानमिवाकुर्वन्। रेणूनामूर्ध्वगमनेन गगनपदमत्रौचित्यमावहति ।

हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥[2]

सुपर्णेन गगने वहनं युज्यते यत्र गच्छन्ति तद् गगनमतोऽस्मिन्प्रसङ्गे गगनपदमेव सर्वोत्कृष्टम् ।

गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥[3]

अवतरणमपि गगनादेव युज्यते गतिकर्मत्वाद्। गगनपदस्यात्रापि प्रयोगौचित्यम् ।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः ।
अधिरोहति शैलाग्रं तडित्वानिव तोयदः ॥[4]

अधिरोहणमपि तथा गगनादेवाभीष्टं कवेः ।

गगनोज्ज्वलकानने मृगलोचना भ्रमन्ती [5]

अत्रापि गगनपदेन गमनकर्मैव सूच्यते ।

व्योमन्

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥[6]

व्ययति संवृणोत्याच्छादयति सर्वं भूतलमिति व्योम । स्यन्दनोद्धूतरजस्तया व्याप्ते व्योम्नि यद् व्योम्नो व्योमत्वमाच्छादकत्वमेव नष्टम् । धूसरवर्णेन च तद्

१. रघु० ९।५०
२. तत्रैव १०।६१
३. कुमार० ६।४९
४. विक्रमो० १।१५
५. तत्रैव ५।५९
६. रघु० ४।२९

भूतलमिवालक्ष्यत। गगनचारिभिर्भूतलं च व्योमेवाद्दश्यत भूतले दानवारिवर्षकाणां गजानां घनसन्निभत्वाद्। गगनचारिणा कृते भूतलमेवाच्छादकं व्योम जातम्, भूतलस्य स्पष्टदृष्टत्वात् गगनस्य च धूलिसंवृतत्वाद्। भूतले तु धूलिर्नास्ति गजदानवारिसेचनकारणात्। अत्यन्तमुपयुक्तमाकाशपर्यायेषु व्योमेतिपदमत्र कविना प्रयुक्तम्।

आकाशः

छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्॥[1]

आ समन्तात् काशन्ते सूर्यादयोऽस्मिन्नित्याकाशः। आविष्कृतचारुतारत्वमाकाशे यथोपपद्यते न तथा व्योमनि गगने वा। एवमत्रप्रयुक्तमाकाशेति पदं नितान्तं सङ्गच्छते।

अन्तरिक्षम्

हृदारपतज्ज्योतिरिवान्तरिक्षादादत्त जैत्राभरणं त्वदीयम्।[2]

अन्तर् ऋक्षाणि नक्षत्राण्यस्मेत्यन्तरिक्षं पृषोदरादित्वादिवे।[3] अन्तरिक्षात् पतज्ज्योतिरित्यत्र ज्योतिःसम्बन्धेऽन्तरिक्षपदमेव सर्वाधिकमुपपन्नम्।

खम्

खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः।[4]

कीदृक् सुन्दरं संयोजनमत्र खपदेन विहितम्। खर्वति मनोऽस्मिन्निति खं तस्मिन् खे आकाशे खेलगामी खेलं सुन्दरं गच्छतीत्यत्राकाशपर्यायेषु खपदमेव युज्यते।

नभः

सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः॥[5]

नह्यते मेघैरिति नभः। राजहंससहायभूतो मेघो यत्र वर्तिष्यते तदर्थं नभस्पदमति समीचीनम्।

---

१. रघु० १३।२
२. तत्रैव १६।८३
३. म० क० द्रु०, प्रथमः काण्डः पृ०, ५४
४. कुमार० ७।४९
५. मेघ० १।११

मेघः

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।[१]

मेहति सिञ्चतीति मेघः । निःशेषवर्षणं मेहनकर्मणः सेचनकर्मणो मेघस्यैव युज्यते तेनात्र युक्तियुक्त मेघपदमुपात्त कविना ।

श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः ।[२]

मेहनकर्मणा मेघेनैव दिशामार्द्रवासस्त्वमुपपन्नम् । मेहनेन सेचनेनैव वासांस्यार्द्राणि भवन्ति ।

तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥[३]

मेघप्रभवा आप इवापतन्नित्यत्रापि मेघादपां पतने मेघस्य मेहनकर्मैव सूच्यते ।

मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥[४]

मेघपदस्य मेहनकर्मत्वमत्र स्पष्टमेव ।

पुरं नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ॥[५]

अपां विसर्गाद् मेहनाद् निदाघग्लपिताया ऊर्व्या नवीकरणं मेहनकर्मणा मेघेनैवात्र कथितम् । मेघपदमेवात्र सर्वाधिक सङ्गच्छते ।

अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥[६]

मेहनकर्मणो मेघस्योदयं विना वृष्टिर्मेहनं नैव संभाव्यते । प्रकृते प्रसङ्गे मेघपदमतीवोपयुक्तम् ।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।

---

१. रघु० ४।१५
२. तत्रैव ११।६०
३. तत्रैव १४.८
४. तत्रैव १५,५८
५. तत्रैव १६।३८
६. कुमार० ६।५४

आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥[1]

प्रियताविप्रयुक्तत्वात् कामसन्तप्तस्य यक्षस्य कामाग्निं मेहनकर्मा मेघ एव प्रशमयितुमलमित्यस्मिन् मेघशब्दे परिपाकः । न ह्यत्र जलदघनजीमूतादिपदैस्तदौचित्यं प्रतिपादयितुं शक्यम् यत्खलु मेघपदेन ।

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।[2]

सुखिनोऽपि सुरतभाजोऽपि चेतसि मेहनकर्मा सेचनकर्मा मेघस्तादृक्शृङ्गारसेचनं करोति यत्तच्चेतः शृङ्गारचेष्टाविकलं भवति । कण्ठाश्लेषप्रणयियोग्ये जने दूरसंस्थे सति किं न स्यादपि स्वरयं स्यादिति सुतरां कविरत्रापि मेघशब्दप्रयोगे परिपक्वतां सूचयति । विक्रमोर्वशीयेऽप्ययमेव भावो विद्यते—

एतेन पुनर्निवृतानामप्युत्कण्ठाकारिणा मेघोदयेनानर्थाधीनो भविष्यति ।[3] इति ।

धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः[4]

सन्निपातेऽत्र सलिलस्य प्राधान्यात्सेचनकर्मप्रधानता सूच्यते मेघपदेन न तु सन्देशहारकता । अतो मेघपदमेवोपात्तम् ।

घनः

तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥[5]

हन्यते ताड्यते उह्यते वायुनेति घनः । मरुत्सखस्य घनस्यैव युज्यते । मरुत्साहचर्यादिव घनस्यैतस्मात्तो गमनम् । यद्वा घनः निबिडः सान्द्रः जलमध्यस्थत्वाद् 'मूर्तौ घनः'[6] इति निपातनात् सिद्धेः मरुता हन्यमानानां तादृशानां घनानामेव सपुष्पजलवर्षणं युक्तियुक्तमतो मेघपर्यायेषु घनपदमुपात्तं कविना ।

'प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद् भ्रमता घनेन ।[7]

१. मेघ० १।२
२. तत्रैव १।३
३. विक्रमो० ४।२।३
४. मेघ० १।५
५. रघु० १।३
६. पा० ३।३।७७
७. रघु० १३।१४

आवर्तवेगाद् भ्रमण घनस्यैवोपपन्नम् । आवर्तवेगेन हन्यमानत्वात्ताड्यमानत्वाद् घनपदोपपन्नत्वम् ।

आमेखलं सञ्चरतां घनानां छायामधः सानुगतां निषेव्य ।
उद्वेजिताः वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥[1]

घनत्वाद् निबिडत्वाद् घनानामामेखल सञ्चरणं युज्यते घनपदञ्चात्र नितान्तसङ्गतम् ।

सटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥[2]

विषाणेन प्रोतत्वं स्यूतत्व घनस्यैवोपपन्नं घनत्वाद् घनस्यैव च पङ्कसादृश्यं युज्यते सान्द्रो घन एव तादृशः । एवमत्र घनपदमेवात्यन्तमुपपद्यते ।

अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वाम् ।
रिक्तः सर्वो भवति हि लघु पूर्णता गौरवाय ॥[3]

जलपूर्णस्य मेघस्य घनत्वं युक्तमेव । तथाभूतमन्तःसारं घनं त्वामनिलस्तुलयितु न शक्ष्यति रिक्तं तु शक्ष्यत्येव । तेनैव मेघस्य 'तोयमादाय गच्छे'रिति जलग्रहणमावश्यकं मतम् । कविनात्र मेघार्थं 'घने'ति युक्तं पद प्रयुक्तम् ।

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।[4]

नवाम्बुभिर्घनत्वादेव घनाना दूरविलम्बित्वं भवति । घनपदमत्रापि युज्यते ।

घनमुपरिघनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥[5]

वारिगर्भोदरत्वाद् घनानां घनत्वमुपपन्नम्, सामान्येन घनपदस्य यथार्थ प्रयोग करोत्येव कविरन्यत्र । तद्यथा—'वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।[6]

---

१. कुमार० १।५
२. तत्रैव ७।४६
३. मेघ० १।२१
४. शाकु० ५।१२
५. तत्रैव ७।७
६. रघु० १३।७७

मेघपर्यायेषु घनपदमेवात्र समीचीनम् ।

अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो घनाः ।[1]

रथचक्रेण हन्यमानास्ताड्यमाना घनाश्चूर्णीभवन्तीत्यत्रापि घनपदमेव सर्वाधिकं सङ्गच्छते ।

नवतमिव लोहिताङ्गः परुषघनच्छेदसंयुक्तः ॥[2]

परुषत्वमविरलत्वं मेघपर्यायेषु घनपद एव युज्यते ।

जीमूतः

अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥[3]

जीवनं जलं मूतं बद्धमनेनेति जीमूतः । अम्बुगर्भस्य मेघस्य जीमूतत्व-मुपपद्यते । चातकैश्च जीमूतस्य मेघस्याभिनन्दनमपि स्वाभाविकं जीमूते हि तेषां जीवनं मूतं बद्धम् । मेघपर्यायेषु जीमूतपदमतीव सङ्गच्छते ।

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः ।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥[4]

उदधेर्जीवनं जलमादाय मेघा जीमूतत्वमाप्नुवन्ति । जलप्रदानेन च दातृत्व-मुपयान्ति जीमूताः । जीमूतपदमत्रापि साभिप्रायम् ।

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।[5]

जीमूतेन यस्मिन्नधीनमस्ति जीवितं तेनैव स्वकुशलमयी प्रवृत्ति हारयिष्यता दयिताजीवितालम्बनार्थिना यक्षेण 'जीमूतेने'ति पदोपन्यासः समुचित एव । 'जीवनार्थं कर्म जीवनप्रदेनैव कर्तव्यमिति भाव' इति मल्लिनाथ-पादाः ।

---

१. विक्रमो० १।५
२. तत्रैव ५।४
३. रघु० १७।६०
४. तत्रैव १७।७२
५. मेघ० १।४

पर्जन्यः

स्तूयमानः क्षणे तस्मिन्नलक्ष्यत स वन्दिभिः ।
प्रवृद्ध इव पर्जन्यः सारङ्गैरभिनन्दितः ॥[1]

पर्षति सिञ्चति वृष्टिं ददातीति पर्जन्यः। तस्मिन् क्षणे अभिषेककाले बन्दिभिः स्तूयमानः स राजा प्रवृद्धः सारङ्गैश्चातकैरभिनन्दितः पर्षणार्थं सेवनार्थं प्रवृद्धः पर्जन्यो मेघ इवालक्ष्यतेत्यर्थे पर्जन्यपदमत्यन्तमुपयुक्तम् ।

बलाहकः

तृषाकुलैश्चातकपक्षिणां कुलैः प्रयाचितास्तोयभरावलम्बिनः ।
प्रयान्ति मन्दं बहुधारवर्षिणो बलाहकाः श्रोत्रमनोहरस्वनाः ॥[2]

वारिवाहका,बलाहकाः । बलाहकानां तोयभरावलम्बित्वमुपपन्नमेव वारिगर्भत्वाद् मन्दयानमपि युज्यते सजलमेघस्य गर्जितानामामन्द्रत्वात् श्रोत्रमनोहरस्वनत्वमपि युक्तमतो मेघपर्यायेषु बलाहकपदोपादानमत्र सर्वाधिकं सङ्गतम् ।

जलदः

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।[3]

इत्यत्र 'जलद' इति सम्बोधनं सहेतुकम् । जलति जीवयति लोकान् यद्वा जालयत्याच्छादयति भूम्यादीनिति जलम् । तद्ददातीति जलदः । साम्प्रतमुद्धृतमाचार्यवर्यैर्हजारीप्रसादद्विवेदमहाभागैः—'जलदानेन हि जलदो न हि जलदः पुञ्जितो धूमः'[4] इति । जलदानेन निखिलं जगदाप्याययन् जीवनसञ्चारञ्चापादयन् जलद एव यक्षपत्न्यै सन्देशदाने ननु जीवनदाने सम्यगर्हः । किञ्च जलस्य स्निग्धत्वं शीतत्वञ्च लोकानुग्रहार्थमेव । अतः खलु 'रिक्तोऽसि यज्जलद सैव तवोत्तमश्रीरि'[5]ति कश्चिदाह । एवमत्र जलदशब्दे प्रयोगचणत्वम् । पुनश्च—

---

१. रघु० १७।१५
२. ऋतु० २।३
३. मेघ० १।१३
४. 'मेघदूत—एक पुरानी कहानी' (डा० हजारीप्रसाद द्विवेदी), पृ० २७
५. तत्रैव०

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।[1]

इत्यत्र जलदेति सम्बोधनात् परोपकारध्वनिना प्रार्थनायामवश्यकर्तव्यत्वं सूचितम् इति भरतमल्लिकपादाः स्वटीकायां विशदयन्ति । विद्युल्लताकारश्चैवमाह—जलदेति स्वकीयशीकरनिकरशिशिरमारुतस्पर्शेन तस्या निर्वापितशरीरतया सुखनिद्रोपपत्तिर्द्योत्यते । अथवा स्तनितस्यैव निषेधाद् वृथावस्थानपरिहाराय तत्समीपे स्थित्वैव बहिः शनैः शनैर्निश्शब्द जलमोक्षणविनोदः कार्य इति व्यज्यते । अथवा विरहिजनजीवितहरत्वेन प्रसिद्धस्य भवतो दर्शने सा यथा न प्राणान् जह्यात् तथा कर्तव्यमिति । एवमत्र जलदपदे विशेषः ।

वायुः

न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ।।[2]

वातीति वायुः । तत्पार्श्वे तालवृन्तानिलाधिकं वायुर्न वातीत्यत्र यथार्थसंयोजनं वायुपदेन विहितम् ।

नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ।।[3]

वायुर्वास्यतीत्यत्रापि वायुरिति युक्तपदं प्रयुक्तम् ।

तं चेद् वायौ सरति सरलस्कन्धसंघट्टजन्मा[4]

वायौ सरति सतीति कथने गतिकर्मणो वायोः सरणमुपपन्नम् । वायुपदमत्रापि युज्यते ।

वायुर्विवाति हृदयानि हरन्नराणां[5]

विवातीति कथने वायुपदमेव सुतरां सङ्गच्छते ।

१. मेघ० २।३६
२. कुमार० २।३५
३. मेघ० १।४६
४. तत्रैव १।५७
५. ऋतु० ६।२४

समीरणः

'समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम् ॥[1]

सम्यगीरयतीति समीरणः । समीरणोत्था तरङ्गलेखा मानसराजहंसी पद्मात् पद्मान्तर नयति समीरयतीत्यत्र तरङ्गलेखायां नयनधर्मः समीरणधर्मः समीरणोत्थत्वादेव विद्यते । तेनात्र वायुपर्यायेषु समीरणपदप्रयोगो नितान्तमुचितः ।

धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥[2]

समीरणेनैव धूमस्यापसारणं युज्यते समीरणत्वादतः समीरणपदमत्र सुतरां प्रयुक्तमानीतम् ।

'समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः ॥[3]

सम्यगीरयित्रा नोदयित्रा वायुना सहायीभूतोऽपि दवाग्निर्जलं दग्धुं नेच्छत्यपि तु काष्ठादिकमेव दहति । यथार्थमत्र समीरणपदं प्रायोजि कविवरेण कालिदासेन ।

समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥[4]

हुताशनस्य नोदने प्रेरणे समीरण एव सहायो भवति तेनात्रापि वायुपर्यायेषु समीरणपदमेव युक्तियुक्तम् ।

ससीकराम्भोधरसङ्गशीतलः समीरणः कं न करोति सोत्सुकम् ॥[5]

समीरणः क न सोत्सुकं करोति कं नौत्सुक्यं प्रति समीरयति प्रेरयतीत्यत्रापि समीरणपदमुपपन्नम् ।

पवनः

तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥[6]

---

१. रघु० ६।२६
२. तत्रैव ७।५५
३. तत्रैव १७।५६
४. कुमार० ३।२१
५. ऋतु० २।१७
६. रघु० २।१३

वायुपर्यायेषु पवनपदमत्र व्यञ्जकमस्ति । यो नृप आचारेण पूतः स जगत्पावनस्य वायोरपि सेव्योऽभूदिति भावे 'आचारः परमो धर्मः इति शिष्ट-वचनमनुसृत्य आचारपूतत्वात् परमधर्मात्मानं तं राजानं पवनोऽपि सिषेवे। पवनपदेनैवमाचारपूतस्य माहात्म्यमिवोद्भावितम् ।

क्ष्मा

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम् ।
क्ष्मां लम्भयित्वा क्षमयोपपन्नं वने तपः क्षान्ततरश्चचार ॥[1]

क्षमते सहते सर्वमिति क्ष्मा भूमिः। क्षमयोपपन्नं सहनशील पुत्रं क्ष्मां सहनशीलां सर्वसहां लम्भयित्वा प्रापय्य स (पुण्डरीकः) क्षान्ततरः सहनशीलः सन् वने तपश्चचारेत्यत्र भूमिपर्यायेषु क्ष्मापदोपादानमत्यन्तसङ्गतम् ।

विश्वम्भरा

त्वया विश्वम्भरे देवि मामन्तर्धातुमर्हसि ॥[2]

विश्वं बिभर्तीति विश्वम्भरा। या विश्वं बिभर्षि सा त्वं देवि मां कथं न बिभरिष्यसीति 'विश्वम्भरे' इति सम्बोधनपदेन व्यज्यते। पृथ्वीवाचकं 'विश्व-म्भरे' इति पदमत्र व्यञ्जकम् ।

आराध्य विश्वेश्वरमीश्वरेण तेन क्षितेर्विश्वसहो विजज्ञे ।
पातुं सहो विश्वसखः समग्रां विश्वम्भरामात्मजमूर्तिरात्मा ॥[3]

विश्वम्भरा पातुं सहो विश्वसहः पुत्रस्तेन क्षितेरीश्वरेण विजज्ञे सुपुत्र इत्यत्र विश्वम्भरेति पदे विशेषः। या विश्वं बिभर्ति तामपि पातुं सहो नूनं प्रभूतशक्तिसम्पन्नो विश्वसह इति यथार्थनामा राजा बभूवेति भूमिपर्यायेष्वत्र विश्वम्भरापदमतीवोपपन्नम् ।

समुद्रः

लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥[4]

नदीमुखेन कश्चिन्मकरादिर्यथा समुद्रमाविशति तथैव स रघुर्लिपेर्यथा-

---

१. रघु० १८।६
२. तत्रैव १५।८१
३. तत्रैव १८।२४
४. तत्रैव ३।२८

वद्ग्रहणेन वाङ्मयमाविशदित्यर्थे समुद्रशब्दो नितान्तसङ्गतः। समीचीना उद्रा जलचरविशेषा मकरादयो यस्मिन्निति समुद्रपदव्युत्पत्तेः नदीमुखेन मकरादीनां यथा समुद्रे प्रवेशः स्वाभाविकस्तथैव लिपेर्यथावद्ग्रहणेन रघोर्वाङ्मये प्रवेशो युज्यते। युक्तियुक्तं विद्यतेऽत्र समुद्रपदम्। एवञ्च—

तस्मात्समुद्रादिव मथ्यमानादुद्वृत्तनक्रात्सहसोन्ममज्ज।[1]

समुद्रे मथ्यमाने तत्र विद्यमानानामुद्राणां नक्रादीनामुद्वर्तनं स्वाभाविकमतः प्रकृतप्रसङ्गेऽपि समुद्रपदं समीचीनतयोपन्यस्तं कविना।

अन्येष्वपि व्युत्पत्तिलभ्येष्वर्थेषु समुद्रपदप्रयोगः कविना कृतो यथा—

अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः।[2]

इत्यत्र सह मुदया मर्यादया वर्तन्त इति समुद्रपदव्युत्पत्त्या समुद्रशब्दोपादानमतीव समीचीनम्। समुद्रा यथा वेलां मर्यादां न व्यतीयन्ति तथैव ते कुशादयो राघवा अन्योन्यदेशप्रविभागसीमां न व्यतीयुरिति समुद्रपदौचित्यम्।

यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः॥[3]

वायुविभावस्वोश्चन्द्रसमुद्रयोः सहचरत्वं समानसुखदुःखत्वं वा प्रसिद्धम्। चन्द्रवृद्धौ हि वर्धते समुद्रः। चन्द्रोदयादापः सम्यगुदन्ति क्लिद्यन्त्यत्रेति व्युत्पत्त्या समुद्रपदमत्र समुद्रपर्यायेषु विशेषतः सङ्गच्छते। एवमेवात्रापि।

प्रवृद्धो हीयते चन्द्रः समुद्रोऽपि तथाविधः।[4]

शुक्लपक्षे यथा यथा चन्द्रो वर्धते तथा तथा समुद्रोऽपि समुनत्ति यथा यथा चन्द्रः क्षीयते समुद्रस्यापि तथा तथा समुन्नत्वं नश्यति इत्यत्र समुद्रपदस्यौचित्यम्।

मातले! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सान्ध्य इव मेघपरिघः सानुमानालोक्यते।[5]

यः समुनत्ति तस्मिन्नवगाहनात् कनकरसनिष्यन्दित्वं युज्यते। तथा चात्र समुद्रपदमेवोपात्तम्।

---

१. रघु० १६।७९
२. तत्रैव १६।२
३. तत्रैव १०।८२
४. तत्रैव १७।७१
५. शाकु० ७

**ऊर्मिमाली**

प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥[1]

चन्द्रं दृष्ट्वा प्रहृष्टः प्रवृद्धोर्मिर्भवति तेनात्र समुद्रार्थे ऊर्मिमालिपदमत्यन्तमुपयुक्तम् ।

**आपगा**

तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।[2]

अपां समूहस्तेन सह गच्छतीत्यापगा नदी । नद्या मूर्तरूपं प्रकटयितुं सुतरां कविरत्र 'आपगा' इति पदं प्रयुङ्क्ते । न खल्वत्र नदीशब्दः सरिच्छब्द अन्यो वा कश्चिन्नदीपर्यायस्तथा समीचीनो यथा 'आपगे'ति । अपां स्पष्टदृश्यत्वात् पतिं सागरमान्नुवत्यामापगायां नायिकात्वदर्शनं स्वाभाविकं तेनात्र 'आपगे'ति पदमेवोपपन्नम् ।

एवञ्च—

सन्तानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः ।[3]

इत्यत्रापि नदीपर्यायेषु आपगे'ति पदमेव कविर्युक्ततममन्यत । सलति गच्छतीति सलिलम् । दूरस्थितत्वाददृश्यत्वाच्च नदीसलिलानां सलिलत्वं न दृश्यते किन्तु सामीप्यात् सन्तानैस्ता नद्योऽपां समूहेन गच्छन्त्यो दृग्गोचरीभवन्तीत्यापगापदेन यत्सिध्यति तन्नान्येन नदीपर्यायेण ।

**स्रोतोवहा**

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥[4]

स्रोतांसि वहतीति स्रोतोवहा नदी । आवर्तस्य स्रोतस्येवोद्भवत्वादावर्तमनोज्ञनाभेरिन्दुमत्या उपमानत्वेन स्रोतोवहेतिपदप्रयोगो नितान्तमुपयुक्तः ।

पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥[5]

---

१. रघु० ५।६२
२. तत्रैव ६।१७
३. शाकु० ७।८
४. रघु० ६।५२
५. शाकु० २।१७

स्रोतोवहः स्रोतो यथा प्रतिहतमिति कथने तु स्रोतोवहेति नदीपर्यायः सर्वाधिक प्रयुज्यते ।

स्रोतोवहां पथि निकामजलामतीत्य
जात. सखे प्रणयवान्मृगतृष्णिकायाम् ॥[1]

निकामजलामिति विशेषणेन सह स्रोतोवहामिति विशेष्यमेवात्यधिकमुपपन्नम् ।

स्रवन्ती

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।[2]

इत्यत्र नदीपर्यायेषु 'स्रवन्ती'तिपदस्यैवौचित्यम् । अतिथिनामके राज्ञि शासति सति सार्था भयरहिताः स्रवन्तीषु नदीषु जलचराणां ग्राहादीनामभावाद्वापीष्विव वनेषु च हिंसकाणां व्याघ्रादीनामभावादुपवनेष्विव विचेरुः । स्रवन्तीषु नदीष्वेव ग्राहादीनामागमनशङ्का विद्यते तेनात्र नदीपर्यायेण 'स्रवन्ती'ति पदमेव समञ्चते ।

पद्माकरः

मुखैः प्रभामण्डलरेणुगौरैः पद्माकरं चक्रुरिवान्तरीक्षम् ॥[3]

पद्माकरस्तडागोऽस्त्री इत्यमरः ।[4] प्रभामण्डलरेणुगौरैर्मुखैरन्तरीक्षं पद्माकरमिव चक्रुरित्यत्र मुखानां पद्मसादृश्यात् पद्माकरपदमेव युज्यते, न तु तडागपदम् ।

ह्रदः

लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।[5]

अत्र ह्रदपदमेव सङ्गच्छते । 'तत्रागाधजलो ह्रद' इत्यमरवचनाद् ह्रद एव नक्राणां ग्राहाणां गूढत्व सम्भवमगाधजलत्वात् । अत एव महाकविनापि भावमिममेवावधार्य ह्रदेति युक्तं पदं प्रयुक्तम् ।

---

१. शाकु० ६।१६
२. रघु० १७।६४
३. कुमार० ७।३८
४. अमर० १।१०।२८
५. रघु० ७।३०

वापी

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।[1]

यस्मिन्नग्नि राजनि शासति भुवं सार्थाः स्रवन्तीषु नदीषु वापीष्विव चेरुरित्यत्र वापीपदमेव कवेरभीष्टं न तु दीर्घिकेति। 'वापी तु दीर्घिका' इत्यमरः ।[2] उप्यन्ते पद्मान्यस्यामिति वापी । ग्राहादीनां विनाशात् सार्थानां स्रवन्तीषु नौभिः संचरणं वापीष्विव सुकरं समपद्यत । वापीसाम्येन स्रवन्तीनां निर्विघ्नत्वं सुगमत्वञ्च सूच्यते ।

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैः स्यूता कमलमुकुलैः स्निग्धवैदूर्यनालैः ।[3]

वापी कमलमुकुलैः स्यूतेति वापीपदं सार्थकम् । वाप्याः कं जलम् अलन्ति भूषयन्तीति तादृशैः कमलैः स्यूतेति कमलपदेऽपि विशेषः ।

सलिलम्

तस्मिन्काले नयनसलिलं योषितां खण्डितानाम् ।[4]

सलति गच्छतीति सलिलम् । नयनाभ्यां सलति तेनैवात्र नयनसलिलत्वम्। नयनपदेन सह सलिलपदनियोजनमन्यत्रापि विदधाति कविर्यथा—

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैः [5]

अपि च—

तन्वीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चित्[6]

एवञ्च —

मत्सम्भोगः कथमुपनमेत्स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ।[7]

---

१. तत्रैव १७।६४
२. अमर० १।१०।२५
३. मेघ० २।१६
४. तत्रैव १।४३
५. तत्रैव २।४
६. तत्रैव २।२६
७. तत्रैव २।३३

इत्यादिषु सर्वत्र सलिलपदे विशेषः ।

पर्वतः

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः ।[१]

इत्यत्रानुप्राससौन्दर्यातिरिक्त गिरिपर्यायेषु पर्वतपदस्य सङ्गतिरवलोकनीया। पर्वाणि भागाः सन्त्यत्रेति पर्वतः । पक्षोऽपि पर्वतभागस्तस्य शातनश्छेदक इन्द्र इत्यत्र पक्षसम्बन्धे पर्वतशब्दस्यैव प्रयोगः संयुज्यते ।

एवमन्यत्रापि

पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥[२]

यद्यप्यत्र शिलावर्षणप्रसङ्गात् शैलः शिलोच्चयो वा युक्ततरः स्यात् किन्तु पक्षसम्बन्धात् पर्वतपदमेव कवेरभीष्टम् ।

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥[३]

मेरुशृङ्गाण्युत्पाट्य तारकेण स्वभवनेषु क्रीडापर्वता रचिताः। उत्पाटितैः शृङ्गैः रचितानां गिरीणां पर्वयुक्तत्वमुपपन्नम् । तेनात्र पर्वतपदमेव साधु ।

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।[४]

पर्वते पर्वत इति द्विरुक्त्या प्रतिपर्वतं कालक्षेपस्तु सूच्यत एव पर्वतपद-प्रयोगेण मेघस्य प्रतिभागमाश्रयणमपि ध्वन्यते तेनैवात्र कविना पर्वतपदं प्रायोजि ।

अपि वनान्तरमल्पकुचान्तरा श्रयति पर्वत पर्वसु सन्नता । [५]

पर्वसु सन्नताया उर्वश्या अन्वेषणे गिरये पर्वतेति सम्बोधनमतीवोपपद्यते ।

---

१. रघु० ३।४२
२. तत्रैव ४।४०
३. कुमार० २।४३
४. मेघ० १।२४
५. विक्रमो० ४।४६

शिलोच्चयः

न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥[1]

शिलाभिरुच्चीयत इति शिलोच्चयः। मारुतस्य रंहो यत्पादपोन्मूलने शक्तं किन्तु शिलोच्चये पर्वते न मूर्च्छति न प्रसरतीत्यत्र पर्वतौन्नत्यं द्योतयितुं पर्वतपर्यायेषु शिलोच्चयपदमेव सर्वाधिकमुपपन्नं तेनात्र कविः साभिप्रायमिदं पदं प्रयुङ्क्ते।

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥[2]

इत्यत्रापि पर्वतौन्नत्यं प्रकटयितुं कविना 'शिलोच्चये'ति पदं प्रयुक्तम्। शिलोच्चय एव तमर्थमुच्चैर्भाषितुं समर्थः। नात्र तस्मादचलपर्वतगिरिप्रभृतयो गिरिपर्यायास्तथा युज्यन्ते यथा 'शिलोच्चये'ति।

अचलः

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ।[3]

इत्यत्र पर्वतस्य दाढ्यं सूचयितुमचलपदप्रयोगः। अचलेऽपि यदकुण्ठितं तन्नूनमतीव कठोरमस्त्रमित्यचलपदेनैव ध्वन्यते।

मार्गाचलव्यतिकराकुलितेव सिन्धुः[4]

इत्यत्रापि पर्वतपर्यायेष्वचलस्य प्रयोगस्तदेव तात्पर्यं सूचयति। मार्गे योऽचलः दृढः पर्वतस्तेनैवावरोधः सम्भाव्यते। अचलादन्यद् किमपि पदमत्र न युज्यते। महाकवेरयमेव शब्दपरिपाकः।

अटवी

अटव्यरण्यं विपिनं काननं वनमि[5]त्यमरेण वननामसु पठिताः शब्दा न समानार्थका इति सिद्धं तेषां रामायणमहाभारतादिषु सद्प्रयोगदर्शनात्।

---

१. रघु० २।३४
२. तत्रैव २।५१
३. तत्रैव ११।७४
४. कुमार० ५।८५
५. अमर० २।४।१

यथा हि—

दुष्प्रतीकमरण्येऽस्मिन् किं तात वनमागतः[1]

इत्यत्र अरण्यं गजाद्युपभोग्यम् । वनमाम्रादियुक्तं मनुष्यभोग्यमिति वनारण्ययोर्भेदमाह तिलककारो रामः । एवञ्च—

शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकानना.[2]

इत्यत्र काननपदव्याख्यायां रम्यकाननाश्चारुवृक्षसङ्घा इति विशिनष्टि रामः । भारते च तथा—

निर्जने विपिनेऽरण्ये शकुनैः परिवारिता[3]

इत्यत्र वेपन्ते जना यत्रेति व्युत्पत्त्या विपिनपदं निर्जनपदेन सहारण्यस्य विशेषणत्वेन प्रयुक्तम् । कालान्तरेण चैतत्पदं काव्यकारैर्वननामसु स्वीकृतम् । योगवाशिष्ठेऽपि 'जङ्गलारण्यभूमिष्वि'[4]ति कथने 'जङ्गलम्' 'अरण्यञ्चेति वनपर्याययो. सहप्रयोगो विद्यते येनैतयोर्भिन्नार्थकत्वं सिध्यति । भिन्नार्थकानीमान्यभिधानानि कालिदासेनापि यथास्थानं याथार्थ्येन प्रयुक्तानि । तथा हि—

मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यतेऽटवीतोऽटवी ।[5]

अटन्त्यत्रेत्यटवी । आहिण्डनेऽटवीशब्दप्रयोगोऽत्र नितान्तमुपयुक्तः । न तथाऽत्र काननं वनं विपिनं वा प्रयोगार्हं यथेदमटवीपदम् । एवमेव ।

त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि ।[6] इत्यत्रापि तदेव तात्पर्यम् ।

अरण्यम्

रामायणटीकाकारस्य रामस्य 'गजाद्युपभोग्यमरण्य'मित्यरण्यपदव्याख्यया सूच्यते यन्नगराद्दूरं सामान्यजनाप्राप्यं वनवारणादिसङ्कुलं किञ्चित्स्थानमरण्यमासीत् । साधारणजनैर्दुष्प्राप्यमेतादृगेकान्तस्थानं तपश्चर्याहेतोस्तपस्विभिरु-

१. रा० २।१००।५
२. तत्रैव २।४८।१०
३. महा० १।६६।१२
४. योगवाशिष्ठ० ५।५४।८७
५. शाकु० २,अङ्क
६. तत्रैव २ अङ्क

गितमनः ननु कालिदासस्तादृक् स्थानं 'धर्मारण्यमि'ति ब्रूते। 'अर्यते गम्यते यत्रे'त्यरण्यपदव्युत्पत्तेरपि कवेस्तादृशाः प्रयोगाः साभिप्राया लक्ष्यन्ते। यथा हि—

> तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः।
> पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः॥[2]

इत्यत्रारण्यपदमेव युक्तं शेषे वयसि रघोररण्यसमाश्रयोन्मुखत्वात्।

> अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये।[3]

तपःसमाधये पार्वत्यारण्यवासयाचनं युज्यते। अत्राप्यरण्यपदमेवाभीष्टं कवेः।

एवञ्च—

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।[4]

अत्राप्यरण्यपदमेव साधु।

भवति ! यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः[5]।

इत्यत्राप्यत्र च—

> धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः।[6]
> वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः॥[7]

इति सर्वत्रारण्यमिति युक्तं प्रयुक्तम्।

**विपिनम्**

वेपन्ते जना यत्रेति विपिनमिति व्युत्पत्त्या निर्जनं गहनं भयावहं स्थानं विपिनं भवेत् कालिदासेनाप्यस्मिन्नेवार्थे पदमिदं प्रयुक्तं यथा—

---

१. आप्टेकोशः पृ० २१४
२. रघु० ८।१२
३. कुमार० ५।६
४. कुमार० ५।१५
५. शाकु० १।२३।२४
६. तत्रैव १।३१
७. तत्रैव ४।६

विपिनानि प्रकाशानि शक्तिमत्वाच्चकार सः ॥[1]

प्रगाढान्धकाराद् यानि विपिनानि तथा भयावहान्यासन् यज्जना भयाकुलास्तेषु वेपन्ते स्म तान्यनेन शक्तिमत्त्वात् प्रकाशानि निर्वृक्षाणि कृतानीत्यत्र सुतरां कविर्वनपर्यायेषु विपिनपदं प्रयुङ्क्ते ।

एवञ्च—

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।[2]

इत्यत्रापि वनस्य भीषणत्वमन्धकाराच्छादितत्वं च सूचयितुं विपिनपदमुपन्यस्तम् ।

शाखी

नाम्भसां कमलशोभिनां तथा शाखिनां च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः ॥[3]

शाखाऽस्यास्तीति शाखी वृक्षः । बहुशाखायुक्त एव वृक्षः प्रकर्षच्छायाकारणात् परिश्रमं छेत्तुमर्हतीत्यत्र वृक्षपर्यायेषु शाखिपदं साभिप्रायं प्रयुक्तम् ।

निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥[4]

अत्रापि शाखिपदे विशेषः । शाखिनोऽपि निवातनिष्कम्पतया योगाधिरूढा निश्चलाङ्गा इव विभान्ति । शाखा इह वृक्षस्याङ्गानि तासु कम्पो न विद्यते निवातात् तेन ताभिर्युक्ता शाखिनः समाधिस्था इव दृश्यन्त इत्यर्थः । एवमत्र शाखिशब्देन यत्सिध्यति न तदन्येन वृक्षपर्यायेण ।

मुदित इव कदम्बैर्जातपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव ।[5]

शाखिपदमत्रापि साभिप्रायं प्रयुक्तम् । नृत्यकर्मणि भावविशेषं सूचयितुमङ्गप्रत्यङ्गानां सञ्चालनं क्रियते । वनान्तोऽपि मुदितः पवनचलितशाखैः शाखिभिस्तत्कर्म सम्पादयतीत्यत्र शाखाबाहुवतां वृक्षाणां कृते शाखिपदमुपयुक्तम् ।

---

१. रघु० ४।३१
२. तत्रैव ६।७२
३. तत्रैव ११।१२।
४. तत्रैव १३।५२
५. ऋतु० २।२४

व्रततिः

> भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
> अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥[1]

व्रततिपदमत्र व्यञ्जकमस्ति । यथा तरुच्छेदात् तदाश्रिता व्रततिर्भूम्यां लुठति तथैव भर्तुः प्रणाशाज्जनन्यावपि रामलक्ष्मणाभ्यां विलक्षणमिव शोचनीयां दशां प्रपन्ने । वैधव्यकारणादलङ्करणरहितयोर्विक्षिप्तालकयोर्जनन्यो-र्व्रततिसाम्यमत्यन्तमुपपन्नम् । ननु व्रततिपदमेव कथमत्र युक्तम्? कथन्न लतावल्लीवीरुधादिष्वन्यत्किञ्चित्पदं प्रयुक्तमिति विचार्यमाणे एतत्स्पष्टं यदिमे लतावाचकाः शब्दा न पर्यायास्तेषां सहप्रयोगदर्शनात् । रामायणे यथा—

> न चात्र वृक्षा नौषध्यो न वल्ल्यो नापि वीरुधः[2] इति ।

तत्र वल्ल्यो वृक्षाद्याश्रिताः । वीरुधो भूम्याधारा इति तिलकटीकायां रामो वल्ली-वीरुधोर्व्यक्ततरं भेदमाह । भागवते च तथा—

> वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः ।[3]

इत्यस्य व्याख्यायां श्रीधरपादा लतावीरुधोर्विशेषमभिव्यञ्जन्ति 'लता आरोहणापेक्षाः । वीरुधः काठिन्येनारोहणापेक्षा' इति । महाभारते तु लताया आरोहणापेक्षत्वं स्पष्टम् एवोल्लिखितं यथा—

> लताधर्मा धार्तराष्ट्राः शालाः सञ्जयपाण्डवाः ।
> न लता वर्द्धते जात्वनाश्रित्य महाद्रुमम् ॥[4] इति ।

अमरेणापि

> वल्ली तु व्रततिर्लता । लता प्रतानिनी वीरुद्[5]

इत्यत्र लतापदस्य द्विरुक्त्या वल्लीव्रततिभ्यां वीरुधः स्पष्टतरो भेदः स्वीकृतः । वल्लीव्रतत्यौ लतापर्यायौ, प्रतानिनी च लता वीरुद् भवतीति भावः ।

---

१. रघु० १४।१
२. अमर० ४।४८।१०
३. तत्रैव ३।१०।१६
४. उद्योग० २६।४६
५. अमर० २।४।६

वल्लीवीरुत्पदयोष्टीकाया क्षीरस्वामिपादा अप्येव भेदमभ्यूहन्ति 'वलते वेष्टते वल्ली गुडूच्यादिर्माधव्यादिश्च ।' वीरुत्पदस्य टीकायां च जटिला प्रतानशतगामिनी'ति । अनेनेद निर्णेतु सुकर यद् वीरुधो भूम्याधारा वृक्षाश्रयमनपेक्ष्य स्वतन्त्ररूपेण प्रतानशतगामिन्यो भूत्वा वर्धन्ते । प्रस्तुते प्रसङ्गे वीरुत्पद कालिदासस्य नैवाकाङ्क्षित छेदादिवोपघ्नतरोर्व्रततत्या'वित्यत्रोपघ्नतरोरित्युक्तत्वात् । अपि च वीरुत्पदं कविना यत्र कुत्रापि प्रयुक्त तत्र वृक्षाद्यारोहणप्रसङ्गो नैव विद्यते । यथा हि—

अभिभूय विभूतिमार्तवीं मधुगन्धातिशयेन वीरुधाम् ।[1]
आहोस्वित्प्रसवो ममापहरितैर्विष्टम्भितो वीरुधाम् ।[2]
वासार्थं हर सम्भृतं सुरभि यत् पौष्पं रजो वीरुधाम् ।[3]

इति सर्वत्र वीरुधां वृक्षाश्रितत्व नापेक्षितम् । अत्र च वीरुत्पदमेव लतापर्यायेषु कवेरभीष्ट प्रतानशतगामिनीत्वात्तासामेव वनोपवनेषु बाहुल्येन दर्शनात् ।

भवतु, 'छेदादिवोपघ्नतरोर्व्रततयाधि'त्यत्र लतापदमेव युक्ततरं स्याल्लतते वेष्टत इति व्युत्पत्त्या । अथ वा वल्लीपदमेव युक्तं वल्लते वेष्टते संवृणोतीति व्युत्पत्त्या तस्यैव पदस्यौचित्यात् । किमर्थञ्चात्र व्रततिपदमेव कवेरभीष्टम् । उच्यते, लता वा वल्ली वा पदद्वयमपि प्रयुज्यमान वृक्षाश्रितत्वं ध्वनयति । छिन्नोपघ्नतवर्थं न लतापद नैव वल्लीपदं प्रयुज्यते अपि तु व्रततिपदमेवोपयुक्तम् । वैधर्म्याद् विक्षिप्तालकत्वाज्जनन्योर्लतासाम्य वा नोपपद्यते अपि तु छिन्नोपघ्नतरुव्रततिसाम्यमेव सर्वाधिकं युज्यते । एवमेवान्यत्रापि—

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः ।[4]

तीव्राघातेन तरुभ्रंशात्तदाश्रितलतानामेव पादाकृष्टानां पाशरूपत्वमुपपन्नम् । तदवस्थानानां लतानां कृते लतापर्यायेषु प्राग्वद् व्रततिपदमेवोपयुक्तम् ।

वल्लरी

अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी[5]

---

१. रघु० ८।३६
२. शाकु० ५।६
३. विक्रमो० २।१६
४. शाकु० १।३१
५. कुमार० ४।३१

कविना सकृत्प्रयुक्तं वल्लरीपदमस्मिन्प्रसङ्गे नितान्तमुपयुज्यते। वल्लं संवरणम् आच्छनीति वल्लरी। आश्रयद्रुमे गजभग्ने सति वल्लं गता वल्लरी पतनायैव भवति। वल्लीवल्लर्योः समप्रकृतित्वादयं तु न कश्चिद्विशेषः किन्तु 'वल्लरी मञ्जरी स्त्रियामि'[1] त्यमरकोशस्य स्वामिमुकुटसम्मतपाठाद् मञ्जर्या सहप्रयोगेण वल्लरीपदं कोमलातिशयत्वं सद्यः पातित्वञ्च ध्वनयति। तस्मादेव कविना वल्लीपदापेक्षया वल्लरीपदमेवात्र युक्तियुक्तं मतम्। आश्रयद्रुमे भग्ने यथा सुकुमारा वल्लरी नैकक्षणमपि स्थातुं शक्नोति भर्तृवधे रतिरेव कथमात्मानं धारयेदित्यत्र रत्या वल्लीसाम्यमतीवोपपन्नम्।

(ग) मनुष्यवर्गः

मनुष्यः

मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥[2]

मनोरपत्यं पुमान् मनुष्यस्तेषां मनुष्याणामीश्वरो मनुष्येश्वरस्तस्य धर्मपत्नी कथन्न तन्मार्गमनुसरेत्। चारित्रवर्धनपादैर्यथाऽस्मिन् प्रसङ्गे स्वकीयायां टीकायामिदं स्मृतिवाक्यमुद्धृतम् 'पति धर्मरतं पत्नी साध्वी शुश्रूषते तु या। नित्यं स्वमल्पहृदया धर्मपत्नी तु तां विदुरि'ति। यो मनुष्येश्वरस्तस्य धर्मरतत्वं तूपपन्नमेव। न केवलं स एव तस्य प्रजा अपि मनुप्रतिपादितवर्त्मानुसारं वर्तन्ते।[3] मनुष्येश्वरधर्मपत्नीति कथने मनुष्यपदेनात्र दिलीपस्य धर्मनिष्ठावत्त्वं ध्वन्यते। श्रुतेरिवार्थं स्मृतिरन्वगच्छत् इति वचसा च तत्स्पष्टं भवति।

एवञ्च—

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच।[4]

इत्यत्रापि मनुष्यपदेन तदेव तात्पर्यमवगम्यते। मनुष्यो देव इवेति मनुष्यदेवः। यो मनुष्यदेवः स कथं धर्मात् प्रमाद्येत् तेनैव तेन मनुष्यदेवेनानुपदमेव क्षत्रियधर्मो व्याख्यातः।[5] मनुष्यपदमतोऽस्मिन्प्रसङ्गेऽपि नितरां व्यञ्जकम्।

---

१. अमर० २।४।१३

२. रघु० २।२

३. रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः॥—तत्रैव १।१७

४. तत्रैव २।५२

५. क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा॥
—तत्रैव २।५३

पुमान्

रसातलादादिभवेन पुंसां भुवः प्रयुक्तोद्वहनक्रियायाः ।[१]

पा रक्षणे धातोः 'पातेर्डुमसुन्'[२] इत्यौणादिके डुमसुनि प्रत्यये पुमस्पदं सिध्यति । पुंसामादिभवेनेति कथने वराहरूपधारिणो विष्णोर्भूरक्षणहेतुत्वं ध्वन्यते तेनैव रसातलाद् भुव उद्वहनक्रिया प्रयुक्ता । पुमस्पदमत्रात्यन्तमुपपद्यते ।

एवञ्च—

गुरोः स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः ।[३]

आद्यः पुमानिव विष्णुरिव पुंसामन्तरज्ञः स अहीनगुर्भूपतिरवतीर्ण इत्यत्रापि पुमस्पदे तदेव रक्षणहेतुत्वं विद्यते । सामादिभिरुपक्रमैः कथं जना रक्षणीया इत्येव पुंसामन्तरज्ञत्वं तस्माच्च स आद्यः पुमान् आदिरक्षक इवावतीर्णः ।

आज्ञापय ज्ञातविशेषपुंसां लोकेषु यत्ते करणीयमस्ति ।[४]

पुंसां ज्ञातविशेष इति संबोधनमिन्द्रस्य शक्तिमत्त्वं ध्वनयति । ये खलु पुमांसोऽन्यान् पान्ति रक्षन्ति तेषामपि यो ज्ञातविशेषः स नूनमतीव प्रभुत्वसम्पन्न इति पुमस्पदेनात्र सूच्यते ।

अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥[५]

अनन्यसाधारणमप्रसिद्धं कर्म पुंसां यशसे भवतीत्यत्रापि यशःसम्बन्धे पुमस्पदमेव युज्यते ।

जनसामान्यार्थेऽपि पुमस्पदस्य प्रयोगो बहुशः कृतः कविना । परं तत्रायं विशेषो यद् पुमस्पदस्य षष्ठीबहुवचनान्तप्रयोगमेव प्रायेण कविः स्वकृतिषु विदधाति । तद् यथा—

वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।[६]

---

१. तत्रैव १३.८
२. उणादि० ४,१७८
३. रघु० १८।१५
४. कुमार० ३।३
५. तत्रैव ३।१९
६. मेघ० १।१२

प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥[१]
सरांसि चेतांसि हरन्ति पुंसाम् ॥[२]

इति सर्वत्र 'पुंसाम्' इत्येव प्रयोगः कृतः कविना ।

पुरुषः

जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः[३]

पुरति अग्रे गच्छति (बुद्धया) इति पुरुषो 'जीवात्मा' इति व्युत्पत्त्या पुरुषपदमत्र नितान्त समीचीनं विद्यते । प्रकृतिपुरुषः प्रधानपुरुषः, प्रधानतया यः सर्वदा अग्रे तिष्ठतीति यथार्थमत्र पुरुषपद प्रयुक्तम् ।

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टाम्[४]

अत्रापि पुरुषपदौचित्यम् । तस्य भोजराजस्याधिकारो नियोगस्तस्य पुरुषैः पुरःस्थितैः सेवकैः प्रदिष्टां निर्दिष्टामित्यत्र पुरुषपदेन पुरःस्थितत्वं व्यज्यते ।

पुरि शरीरे शेत इति व्युत्पत्त्यनुसारं 'शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ'[५] इति भागवतवचनानुसार जीवात्मपरमात्मसम्बन्धमपि सुतरां परिचिनोति कविरेषु स्थलेषु—

तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥[६]

रघुः समाधिना नश्वरं शरीरं परित्यज्य तमसः परमव्ययं पुरुषं परमात्मानमाप्नोदित्यत्र जीवात्मपरमात्मनोः सम्बन्धः पुरुषपदेनैव सम्यक् प्रतिपादितः ।

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥[७]

---

१. ऋतु० ३।१४
२. तत्रैव ४।६
३. मेघ० १।६
४. तत्रैव ५।६३
५. भागवत० ७।१४।३७
६. रघु० ८।२४
७. कुमार० २।१३

इत्यत्रापि [illegible] सम्बन्धो विशदीकृतः पुरुषपदेन ।

प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम् ।[1]

इत्यस्मिन् पुरुषाकृते. रामस्य परमात्मना सह ऐक्य पुरुषपदेनैव प्रतिष्ठापितम् । 'न त्व साधारणः पुरुषः त्व तु पुरातन. पुरुषोऽसि इत्यह सुतरा वेद्मि' इति परशुरामवचसि देहलीदीपकन्यायेन पुरुषपदमुभयार्थं प्रकाशयति पुरुषपदस्य चैवमत्र महदौचित्य विद्यते ।

अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥[2]

कथमत्र पुरुषोऽधिशेते इत्येव कथितम्, कथन्न विष्णुरधिशेत इति प्रयुक्तम्, कथ वा न 'हरिरधिशेते' इति कथितं लोकसंहरणाद् हरिशब्दौचित्याद्, सत्यं, साभिप्राय प्रयुक्त पुरुषपद कविना । सशरीरस्यैव विष्णोर्भुजगशयनमपेक्ष्यते प्रजापतेर्नाभिप्ररूढाम्बुरुहासनत्वं च पुरुषे हरावेव सम्भवं तेनात्र पुरुषपदोपपत्तिः ।

शरीरं हि जीवात्मन आधारस्तेन शरीरस्थो जीवात्मा पुरुष इति कथ्यते अत एव—

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।[3]

इत्यत्र पुरुषपद विशेषतः प्रयुक्तम् । वर्षशत यावज्जीवात्मा पुरि शरीरे वसतीति पुरुषपदेनैवावगम्यते शतायुर्वै पुरुषः' इति श्रुतिप्रमाणमप्यत्र विद्यते । पुरुषशब्दातिरिक्त नान्यः शब्दोऽत्र युज्यते ।

शरीरस्य दृश्यत्वादात्मनश्चादृश्यत्वात् पुरुषे शरीरस्य प्राधान्य यद्वा जीवस्याधारत्वात् शरीरस्य प्राधान्य 'शरीरमाद्य खलु धर्मसाधनमि'[4]ति कविना स्वयमेवोक्तत्वात् । तस्मादेव पुरुषपदोच्चारणेनैव शरीरवान् कश्चिदाकारः पुरः समुपतिष्ठति । शरीरेष्वपि पुंसा प्राधान्यात् पुरुषपदं पुंस्येव रूढ तेनैवा-

---

१. रघु० ११.८५
२. तत्रैव १३।६
३. तत्रैव १।६३
४. कुमार० ५।३३

स्माकं कविरस्मिन्नर्थेऽपि पुरुषपदं यथास्थानं प्रयुङ्क्ते । यथा—

पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥[1]

इत्यत्र शरीरी पुमानेव पुरुषपदेन बोध्यते ।

यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात् ॥[2]

अत्रापि 'मूर्तः पुमान्' इति पुरुषपदेनावगम्यते । आकृतिः शरीरिण एव भवितुमर्हति तेन पुरुषपदमेवात्रोपात्तम् ।

एवञ्च—

ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्मकेवलम् ॥[3]

इत्यत्र कामभस्मनः पुरुषाकृतित्वं युज्यते ।

रमणः

संभोगं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥[4]

पतिपर्यायेषु रमणपदमेवात्र सर्वाधिकं युज्यते हृदयनिहितारम्भसंभोगास्वादनप्रसङ्गात् ।

कान्तः

काम्यतेऽसाविति कान्तः । महाकविना अत्रैर्थे यत्र कुत्रापि कान्तपदप्रयोगः कृतः स नितान्तमुपयुक्तः यथा—

पत्नीव नारायणमन्यथाऽसौ लभेत कान्तं कथमात्मतुल्यम् ॥[5]

अत्र गुणानुरूपस्य इन्दुमतीभर्तुः कृते कान्तपदं विहाय किमन्यत् पदमुपयुक्ततरं स्यात् । अत्यन्तमेवोपपन्नमत्र कान्तेति पदम् ।

---

१. रघु० १०।५०
२. तत्रैव ११।६३
३. कुमार० ४।३
४. मेघ० २।२७
५. रघु० ७।१३

प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥[1]

अत्र कान्तपदौचित्ये तु संशय एव नास्ति ।

कान्तोदन्तः सुहृदुपगतः सङ्गमात्किञ्चिदूनः[2]

अत्रापि कान्तपदे विशेषः । यः काम्यते तस्योदन्तो नूनमतीव प्रेयान् ।

वल्लभः

वल्लते सवृणोतीति वल्लभः । वरो यदा भार्यां वल्लते संवृणोति ततः प्रभृति तस्य प्रियां प्रति पूर्णवल्लभत्वमपेक्ष्यते । अन्यसङ्क्रान्तहृदयत्वात् तद्वल्लभत्वमपि क्षीयते । अस्माकं कविरिमं भावं मालविकाग्निमित्रे वल्लभपदप्रयोगेण सुतरां प्रकटयति । यथा—

ततः सा देव्या पृष्टा । किं त्वयवलोकितो वल्लभजन इति ।

तयोक्तम्—मन्दो व उपचारः यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ।

राज्ञो वल्लभत्वं सम्प्रति परिजने विद्यते नास्मास्वि[3]ति इरावतीवचसि वल्लभपदमतीव व्यञ्जकमस्ति ।

पिता

जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥[4]

पातीति पितेति व्युत्पत्त्या पितराविति प्रयोगोऽत्र नितान्तमुपपद्यते । पार्वतीपरमेश्वरौ जगतः रक्षकौ पोषकावपीति पितृपदेनात्र द्योत्यते । 'पिता मात्रे'ति द्वन्द्वैकशेषोऽप्यत्र किञ्चिद् विशिष्टमभिव्यनक्ति । अर्धनारीश्वररूपेण यथा पार्वतीपरमेश्वरौ सम्पृक्तौ तथैव वागर्थावपि सम्पृक्तौ । शिवपार्वत्योः सम्पृक्तत्वमेकशेषेण पितराविति पदेनात्र सुतरां सूच्यते ।

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥[5]

अत्र तु पितृपदस्य व्याख्यैव स्पष्टतः कृता कविना । पितृशब्दं विहाय

---

१. तत्रैव ११।५२
२. मेघ० २।४२
३. माल० ४ अङ्क
४. रघु० १।१
५. तत्रैव १।२४

जनको वा तातो वा गुरुर्वा को वाऽन्यः शब्दोऽत्र प्रयोज्यार्हो न कोऽपीत्येव कथनीयं भवति ।

प्रजाः प्रजानाथ पितेव पासि ॥[१]

इत्यत्र च पितृपदस्य निर्वचनमिव कृतम् । यथा ते पिता प्रजा अपात् तथैव त्वं पासि रक्षसीत्यर्थः । पितृपदमत्र सुतरां संगच्छते ।

मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥[२]

पितृपदमत्र रक्षणार्थमिति सम्यक् ज्ञायते । शिवस्य कृते प्रयुक्तमीशपदं चार्थमिमं पुष्यतितराम् । य ईशः स जगतः स्रष्टा पोषकोऽपीत्यनुपदं पितेति पदेनावगम्यते ।

तनयः

वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥[3]

तनोति विस्तारयति कुलमिति तनयः । 'वंशस्य कर्तारं तनयं ययाचे' इत्यत्र पुत्रपर्यायेषु तनयपदमत्यन्तमुपपद्यते, वंशस्य कर्तारमिति विशेषणेन साकं 'तनये'ति विशेष्यस्यैवौचित्यात् । अथवा तनय औरसः तनूद्भवः, तनुजन्मा, इति वचनात् सुदक्षिणातनोरेवौरसस्तनयः काम्यते न पुनरन्येन केनाप्युपायेनेति तनयपदस्यैव प्रयोगौचित्यम् ।

न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥[४]

इत्यत्रापि तनयपदस्यैवौचित्यं भविष्यति । पुत्रपदमत्र नापेक्ष्यते पितॄणां मुक्तत्वात् । सुततनुजौरसप्रभृतीनां पदानामपि न तथाऽत्रौचित्यं यथा तनयपदस्य, मृत्योरनन्तरं पितॄणां वंशविस्तारस्यैवावश्यकत्वात् ।

अंशे हिरण्याक्षरिपोः स जाते हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरां तरूणां हिरण्यरेता इव सानिलोऽभूत् ॥[५]

---

२. तत्रैव २।४८
३. कुमार० ६।८०
४. रघु० २।६४
१. तत्रैव ८।२६
२. तत्रैव १८।२५

यथा सानिलो हिरण्यरेता· प्रवृद्धस्तरूणामसह्यो भवति तथैव विष्णोरंश-भूते हिरण्यनाभे वंशविस्तारके तनये जाते सति स विश्वसहो राजा द्विषामसह्यो-ऽभूत् तनयेन तस्य बलप्रवर्धितत्वात् । तनयपदमत्र युक्ततरं विद्यते ।

> भूत्वा चिराय चतुरन्तमहीसपत्नी
> दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।[1]

वंशविस्तारके तनये सर्वं राज्यकार्यभारमर्पयित्वा नृपस्य मुक्तचिन्ततरं निवसनम् । तेनात्र तनयपदं सुतरां सङ्गच्छते ।

**अङ्गना**

> पुरमविशदयोध्यां मैथिलीदर्शिनीनां
> कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥[2]

अङ्गानि प्रशस्तान्यस्या इत्यङ्गना स्त्री । (अङ्गात् कल्याणे इत्यनेन न प्रत्ययः) प्रशस्ताङ्गीनामङ्गनानां लोचने कुवलये इव यदि स्यातां तर्हि समुचित-मेवेद स्यात् । अतः स्त्रीपर्यायेष्वङ्गनापदमेवात्र समीचीनम् ।

> कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् ॥[3]

इत्यत्रापि स्त्रीपर्यायेष्वङ्गनापदमेव युक्तम् । प्रशस्तानि यासामङ्गानि तासां केशेषु कामस्य बललाभः स्वाभाविकः ।

> यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
> दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥[4]

जलदाः किम्पुरुषाङ्गनानां तिरस्करिण्यो भवन्तीत्यत्र अङ्गनापदमत्यन्त-मुचितं तिरस्करिण्या तावदङ्गानामेव तिरस्करणत्वात् ।

> स्वेदोद्गमः किम्पुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥[5]

---

१. शाकु० ४।२०
२. रघु० ११।९३
३. तत्रैव १६।५०
४. कुमार० १।१४
५. तत्रैव ३।३३

अङ्गेभ्य एव स्वेदोद्गमत्वात् पत्रविशेषकाणामप्यङ्गे रचितत्वादत्राङ्गनापदमेवोपात्तम् ।

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥[1]

अधीरत्वादस्थिरत्वाच्चाञ्चल्याच्चाङ्गनानामङ्गनात्वम् । तादृशीनामङ्गनानां कुसुमसुकुमारस्य हृदयस्य सद्यःपातित्वं तु युक्तमेव ।

एवञ्च—

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥[2]

इत्यत्रापि चकितचकितमिति पदेनाङ्गनापदौचित्यं सिध्यति, मुग्धाङ्गनानामेव तथात्वात् ।

विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोसि ॥[3]

अङ्गनानामेव विद्युद्दामस्फुरितचकितानि लोलापाङ्गानि लोचनानि कथितान्येवमत्राप्यङ्गनापदमुपपन्नम् ।

संभोगं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥[4]

गणनया देहलीदत्तपुष्पाणां भुवि विन्यसनस्य हृदयनिहितारम्भसम्भोगास्वादनस्य चाङ्गनानामेव विषयत्वादत्राप्यङ्गनापदमेव युज्यते ।

पत्युर्वियोगविपदाग्रहरक्षितानां
चन्द्रो दहत्यतितरां तनुमङ्गनानाम् ॥[5]

---

१. मेघ० १।६
२. तत्रैव १।१४
३. तत्रैव १।१६
४. तत्रैव २।२७
५. ऋतु० ३।६

अङ्गनानां तनुं चन्द्रो दहतीत्यत्राङ्गनाशब्द एव सर्वाधिक सङ्गच्छते। पत्युर्वियोगविषदग्धशरैः पूर्वमेव क्षतान्यङ्गानि यासां तासामङ्गनानामित्यङ्गनापदेनैवाङ्गक्षतिः सूच्यते।

अत्यन्तमात्मसदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥[1]

शकुन्तलासदृशेक्षणवल्लभत्व हरिणाङ्गनापदे अङ्गनाशब्देनैव विशेषतः सूच्यते। तस्मादत्राङ्गनापदं प्रयुक्तम्।

अबला।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी।[2]

इत्यत्र स्त्रीपर्यायेष्वबलापदप्रयोगोऽत्यन्तमुपपद्यते। अल्पं बलमस्या इत्यबला। स्वल्पबलत्वात् सा तपस्विनी किं करोतु यक्षेश्वरस्य प्रबलः शापस्तस्मादेव कविस्तां यक्षीं चकितहरिणीमिव निरीहां निराश्रितां वर्णयति। उत्तरमेघेऽपि—

अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः।[3]

वियुक्तावस्थायां यक्षः प्रियामबले इति सम्बोधनपदेनाकारयति। अत्रापि तस्या निरीहत्वं निराश्रितत्वं च ध्वन्यते। तदुक्तं भरतमल्लिकपादैः—'अबले इति युक्त पदं विरहवेदनया दौर्बल्यस्य स्थापनात्।' इति।

सा सन्न्यस्ताभरणमबला पेलवं धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम्।[4]

शय्योत्सङ्गेऽपि दुःखदुःखेन पेलवं गात्रधारणम् अबलायामेव सम्भाव्यते तेनास्मिन् प्रसङ्गेऽप्यबलापदोपपत्तिः।

अबलावेणिमोक्षोत्सुकानि।[5]

---

१. शाकु० १।२५
२. मेघ० १।२
३. तत्रैव २।४३
४. तत्रैव २।३५
५. तत्रैव २।४१

विरहव्यक्तदौर्बल्यादत्राबलापदे विशेषः। आचार्यकुन्तकपादा अप्याहुः—'अबलाशब्देनात्र तत्प्रेयसीविरहवैधुर्यासहत्वं भण्यते'[1] इति।

एवं शाकुन्तलेऽपि—

इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥[2]

इत्यस्मिन् प्रसङ्गे स्त्रीपर्यायेष्वबलापदमेव युक्ततमं विद्यते। एवं सर्वत्र अबलाशब्दे परिपाकः।

कलत्रम्

कलत्रवन्तमात्मानमवरोधे महत्यपि।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥[3]

कड् शासने धातोर्बाहुलकादत्रन्प्रत्यये कृते कलत्रपदं सिध्यति। कड्यते शिष्यत इति कलत्रं भार्या। यद्वा गड् सेचने धातोरत्रनि [illegible] सिध्यते रेतोऽस्मिन्निति कलत्रम्। यद्वा कलं (शुक्र) त्रायते इति त्रैङ् पालने धातोः कप्रत्यये कलत्रपदम्' इत्येताः कलत्रपदव्युत्पत्तयः [illegible] निर्दिष्टाः,[4] प्रकृतेऽस्मिन्प्रसङ्गे राजलक्ष्म्याः कृते सुदक्षिणायाश्च कृते [illegible]। राजलक्ष्मीस्तेन सुतरां कड्यते शिष्यते सुदक्षिणा च [illegible] रेतस्तस्यां गड्यते। एवमत्र पत्नीपर्यायेषु [illegible]।

एवञ्च—

वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ।[5]

इत्यत्रापि वसुमतीकढनात् शासनात् [illegible]।

तेषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥[6]

इत्यत्र कलत्रपदेनाहिल्यावाच्यपदैः [illegible]।

---

१. वक्रोक्तिजीवितम् १।८।६२
२. शाकु० ४।३
३. रघु० १।३२
४. श० क० द्रु० ८।४६
५. रघु० ८।८३
६. तत्रैव ११।३३

कलत्रवानहं बाले ! कनीयांसं भजस्व मे।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥[१]

कलत्रवानहमिति वाक्यांशेन वृषस्यन्ती शूर्पणखा प्रति रामस्य रतिविमुखत्वं ध्वन्यते। (कलत्ररहितं) कनीयांसं भजस्व इति शासनं च कलत्रपदौचित्यं पुष्णातितराम्।

तां कस्यांञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः।[२]

कड्यते शिष्यते इति कलत्रपदव्युत्पत्त्या चिरविलसनरूपशासनमत्र कलत्रेऽभिव्यज्यते अथवा गडयते सिच्यते रेतोऽस्मिन्निति व्युत्पत्त्या कलत्रपदेनात्र रतिखेदोऽपि सूच्यते। रतिक्रीडानन्तरं यथा दम्पती विश्राम्यतस्तथात्रापि खिन्नविद्युत्कलत्रो मेघः सकलत्रं विश्रमाय निवेद्यते। चिरविलसनं च रतिक्रीडां द्योतयति।

भवतु। अनिर्वर्णनीयं परकलत्रम्।[३]

इत्यस्मिन् दुष्यन्तवचने परकलत्रमिति पदेन शकुन्तलायाः परोपभुक्तात्वं ध्वन्यते।

कान्ता

रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवापि।[४]

काम्यतेऽसाविति कान्ता यद्वा कान्तियोगात् कान्ता। श्री, कान्तिः कान्तामुख एवोपपद्यते। कान्ताशब्दे तथात्र विशेषः।

तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य।[५]

कान्ताया एव हृदये कामिनः प्रवेशो युज्यते।

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः[६]

---

१. रघु० १२।३४
२. मेघ० १।४२
३. शाकु० ५।१३।१४
४. रघु० १६।२०
५. तत्रैव १६।४०
६. मेघ० १।१

या काम्यते तस्या कान्ताया विरहस्तु नूनमत्यधिकक्लेशकरः स्यादत एव 'कान्ताविरहगुरुणा शापेन' इति कथितम् ।

कान्तावियोगपरिखेदितचित्तवृत्तिः[1]

इत्यत्राप्ययमेव भावः कान्तापदप्रयोगे विद्यते ।

यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे ।[2]

अपि च—

तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे ।[3]

इत्युभयत्र स्वपत्न्याः कृते कान्तापदप्रयोगो यक्षस्य तां प्रति बहुकाम्यत्व सूचयति ।

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा ।[4]

पूर्वमियं भवता कान्ताऽभिलषिताऽत एषा भवतः कान्ता पत्नी अस्तीत्यत्र कान्तापदेन ध्वन्यते ।

स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥[5]

तन्मयेन हृदयेन साक्षादिव दर्शनसुखमनुभवता मया या कान्ता दृष्टा सा कान्ता त्वया चित्रीकृता इत्यत्र कान्तापदेन दुष्यन्तस्य बहुकाम्यत्वं व्यज्यते।

एवमेव—

अत्र वने भ्रमता यदि त्वया दृष्टा सा मम कान्ता ।[6]
मां वा नयाशु कलभाषिणि ! यत्र कान्ता ॥[7]
हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।[8]
मयि च विधुरे भावः कान्ताप्रवृत्तिपराङ्मुखः ॥[9]

---

१. ऋतु० ६।२८
२. मेघ० २।१५
३. तत्रैव २।१६
४. शाकु० ५।२६
५. तत्रैव ६।२१
६. विक्रमो० ४।२०
७. तत्रैव ४।२५
८. तत्रैव ४।३४
९. तत्रैव ४।३९

कान्तां विचिन्त्य सुलभेतरसंप्रयोगाम् ।[1]

इति सर्वत्र कान्तापदेन प्रियाया भूरिकाम्यत्वं सूच्यते । कान्तापदं तथा सर्वत्रोपपद्यते ।

**कामिनी**

परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥[2]

भूयान् कामोऽस्या इति कामिनी तादृश्या चतुरया कामिन्या परिवृद्धरागस्य धराधिपस्य हरणमाकर्पणं स्वाभाविकमेव । कामिनीपदमत्र नितान्तमुपयुक्तम् ।

कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु ।[3]

कामिनः कामिनीसहचरत्वमुपपद्यते ।

चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥[4]

भूयान् कामो यासां ताः सुरकामिन्यो ममागमनात्पूर्वं त्वां न विलोभयन्त्विति शङ्का कामिनीपदेन दृढतामाप्नोति ।

नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥[5]

इत्यत्र कामवशात् प्रियमभिसृतानामभिसारिकाणां कृते कामिनीपदं कविना युक्तियुक्तं प्रयुक्तम् ।

बहुगुणरमणीयः कामिनीचित्तहारी ।[6]

अत्र जलदसमयः कामिनीचित्तहारी कथितः । कामिनीपदमस्मिन् प्रसङ्गे नितान्तमुपपन्नं जलदसमये हि कामिनीनां भूयान् कामो विद्यते ।

**जाया**

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।[7]

---

१. माल० ५।३
२. रघु० ९।६९
३. तत्रैव १९।५
४. कुमार० ४।२०
५. मेघ० १।११
६. ऋतु० २।२९
७. रघु० २।१

प्रजानामधिपोऽपि दिलीपः स्वयं प्रजारहितः किन्त्वत्र तस्य भार्यायाः कृते प्रयुक्तं जायापदं शुभमाशंसति । जायतेऽस्यामिति जाया । जायायास्तद्धि जायात्वं यदस्यां जायते पुनः[1] इति मनुः । प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमि[2]ति शाकुन्तलवचनानुसारं महाकविनात्र धेनुशुश्रूषारम्भात्प्रागेव सुदक्षिणाया-मभिप्रेतसिद्धिः काम्यते जायापदप्रयोगात् । जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयमिति मल्लिनाथपादा अपि ।

रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥[3]

गोष्ठीविश्रम्भे जायापदमत्र नितान्तमुचितम् । सीतायाश्च भावि जायात्व-मत्र जायापदेन गम्यते ।

किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ॥[4]

जायापदेनात्र सीताया गर्भिणीत्वं ध्वन्यते । गर्भिणीत्यागे च महानधर्म इति भावमवधार्यैव कविना जायापदं प्रयुक्तं स्यात् ।

कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥[5]

मेघसन्दर्शनेन सुरताभिलाषदृष्टया पत्न्या जायात्वं प्रसुप्तं भवति । तदा च पुत्रनिमित्त सुरतावहेलनं धर्मलोप एव । तदुक्तं रघुवंशे—

धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन्[6] इति ।

केवलं परायत्तजीवन एव सुरतोचिते काले जायां ननु पुत्रोत्पादनधर्ममुपे-क्षितुमर्हति न तु स्वाधीनजीवन इत्याशयः । एवं सत्स्वस्मिन् प्रसङ्गे जायापद-स्यौचित्यम् ।

. . देव इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते ।[7]

---

१. मनुस्मृतिः ६।८
२. शाकु० ७।२६।३०
३. रघु० १३।१
४. रघु० १४।३४
५. मेघ० १।८
६. रघु० १।७६
७. शाकु० ६।२२।२१

इत्यत्र गर्भिणीकृते जायापदमतीव समीचीनं विद्यते ।

इति च भवतो जायास्नेहात्पृथक्स्थितिभीरुता[1]

जायाया स्नेहः स्वाभाविकः । जायास्नेहाच्च पृथक्स्थितिभीरुत्वमपि युज्यते ।

दयिता

दय्यते रक्ष्यते सा दयिता यद्वा दय्यते गृह्यते (रक्षणार्थम्) इति दयिता । दानगतिरक्षणहिंसाऽऽदानार्थकाद् दयधातोः ।

निवर्त्य राजा दयितां दयालुः...।[2]

इत्यत्र भार्यास्थाने दयितेति पदमत्यन्तमुपयुक्तम् । दयालुना नृपतिना दयिताया सुदक्षिणाया निवर्त्तनं युज्यते । वने हि बहुकष्टं हिंसकजन्तूना च बाहुल्यम् ।

प्रत्यासन्ने नभसि दयिताजीविताालम्बनार्थी[3]

यक्षस्य दयिताया रक्षणीयाया जीविताालम्बनार्थित्वमुपपद्यते तस्मादेव स स्वकुशलमयी प्रवृत्तिं जीमूतेन शीघ्रातिशीघ्रं सूचयितुमिच्छति, नो चेद् विरहव्याकुला प्रिया प्राणान् जह्यात् । दयितापदमतः सर्वथोपपन्नम् ।

दयिताविरहोन्मादितः कानने भ्रमति गजेन्द्रः ॥[4]

दयिताविरहेणोन्मादितत्वं स्वाभाविकम् । दयिता कथन्न रक्षिता कथन्न सन्निधापिता किं तस्या मद्विरहे भविष्यतीति विरहोन्मादस्य कारणम् । दयितेतिपदमत्र तस्माद् सुनियोजितम् ।

वनिता

वनिता जातरागस्त्री[5] इति मेदिनीवचनाज्जातरागायामेव 'वनिते' ति पदं सङ्गच्छते । अस्माकं महाकविनाऽपि प्रायेण पदमिदमस्मिन्नेवार्थे प्रयुक्तम् ।

---

१. विक्रमो० ४।३६
२. रघु० २।३
३. मेघ० १।४
४. विक्रमो० ४।३५
५. मेदिनी० ६५।१५०

यथा हि—

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥[1]

वनान्तादावर्तमानस्य नृपस्य निमेषालसपक्ष्मपङ्क्त्या वनितयोपोषिताभ्यामिव लोचनाभ्यां पानं तस्या जातरागात्वं सूचयति । तेनात्र वनितापदोपपत्तिः ।

मोक्षोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥[2]

कटाक्षपाताः जातरागायामेव युज्यन्ते । वनितापदं तथात्र सर्वथा युक्तम्।

उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।
सदृशमिष्टसमागमनिर्वृतिं वनितयाऽनितया रजनीवधूः ॥[3]

जातरागा स्त्री यदि समागमसुखं न लभते तर्हि तस्याः कार्श्यं निश्चितं तेनात्र वनितापदं नितान्तमुपपन्नम् ।

विहर्तुमिच्छा वनितासखस्य तस्याम्भसि ग्रीष्मसुखे बभूव ॥[4]

विहर्तुमिच्छोर्नृपस्य वनितासखत्वमुपपद्यते । जातरागयैव सह विहरणेच्छा भवति ।

अथ मधु वनितानां नेत्रनिर्वेशनीयं
मनसिजतरुपुष्पं रागबन्धप्रवालम् ।[5]

वनितानां जातरागाणामेव नेत्रनिर्वेशनीयं मधु युज्यते । वनितापदं तथाऽत्रापि सर्वथा समीचीनं विद्यते ।

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥[6]

सुरतप्रसङ्गे वनितापदौचित्यं स्पष्टमेव ।

---

१. रघु० २।१६
२. तत्रैव ७।१८
३. तत्रैव ९।३८
४. तत्रैव १६।५४
५. तत्रैव १८।५२
६. कुमार० १।१०

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।[1]

मेघसन्दर्शनेन वल्लभानामागमनाशया प्रोषितभर्तृका जातरागा जायन्त इति वनितापदोपादानम् ।

हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यंल्ललितवनितापादरागाङ्कितेषु ।[2]

पादरञ्जन जातरागासु वनितास्वेव युज्यत इति वनितापदसङ्गतिः ।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः[3]

ललितमस्या अस्तीति ललिता सविलासा इति यावत् 'ललितः रूपवेष-विलासादिभिर्मधुरा' इति पूर्णसरस्वतीपादाः । 'ललितगुणयुक्ता हि नार्यश्च-ञ्चला भवन्तीति विद्युत्साम्यम्' इति भरतमल्लिकपादा अपि । अत्र विद्युतो विद्योपमाभा ललितवनितेति पदमेव द्योतयितुमलम् । वनितानां जातरागस्त्री-णामेवात्र ललितात्व युक्तमिति वनितापदे विशेषः ।

तस्यास्तम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ।[4]

जातरागाणां स्त्रीणां विभ्रमैरेव सिद्ध इति वनिताशब्दे विशेषः ।

केशान्नितान्तघननीलविकुञ्चिताग्रा-
नापूरयन्ति वनिता नवमालतीभिः ।
कर्णेषु च प्रवरकाञ्चनकुण्डलेषु
नीलोत्पलानि विविधानि निवेशयन्ति ॥[5]

जातरागाणां स्त्रीणामेव तथा प्रसाधनकर्म युज्यते तेनात्र वनितापदमत्यन्त-मुचितम् । तथैव च—

काचिद्विभूषयति दर्पणसक्तहस्ता
बालातपेषु वनिता वदनारविन्दम् ।

१. मेघ० १।८
२. तत्रैव १।३६
३. मेघ० २।१
४. तत्रैव २।१४
५. ऋतु० ३।१६

दन्तच्छदं प्रियतमेन निपीतसारं
दन्ताग्रभिन्नमपकृष्य निरीक्षते च ॥[1]

वनितापदमत्रापि जातरागायाः स्त्रियाः कृते प्रयुक्तम् ।

सर्वान्तः पुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥[2]

सा वामलोचना तथा मे स्नेहस्यैकायनीभूता यदन्तःपुरस्य जातरागाः स्त्रियोऽपि सम्प्रति मे हृदयं न हरन्ति इति भावेऽत्र वनितापदं जातरागायामेव सम्यक्तया प्रयुक्तम् ।

अस्तु, शब्दानामित्यन्तया विश्लेषणेनेदमापतति यत्कवेः विलक्षणं शब्दज्ञानमासीत् । यत्र कुत्राप्ययं यस्य कस्यापि शब्दस्य प्रयोगं विदधाति तत्र तस्य नितान्तमौचित्यं सिध्यति । कालिदासप्रयुक्तपदानि न परिवर्तनसहानीत्येव तस्य काव्येषु शब्दपरिपाको दृश्यते ।

---

१. ऋतु० ४।१४
२. माल० २।१४

# तृतीयः परिच्छेदः

## कालिदासस्य निपातप्रयोगौचित्यम्

शब्देतराणामिव कालिदासस्य निपातप्रयोगोऽपि, सर्वथा सुविमृष्टोऽर्थोत्कर्षस्य सम्पादयिता व्यञ्जयिता विशिष्टकाव्यप्रयोजनसाधयिता च वरीवर्ति। नासौ छन्दःपूर्त्यै वा केनापि निर्बन्धान्तरेण वा निपातान् प्रयुङ्क्ते। नास्ति स केवलं भावनासवलितः कविरेव, प्रत्युत वर्तते स्वसौ काव्यतत्त्वविद्वानपि। निपातानां व्यञ्जकतामसौ साधु परिचिनोति। अत एव कालिदासप्रयुक्ता निपाताः न किमप्यन्तरं परिवर्तनं वा सहन्ते। तदेवं कालिदासस्य निपातप्रयोगस्तदीयशब्दपरिपाकस्य महत्त्वपूर्णमङ्गं विद्यते। सूक्ष्मेक्षिकतया तस्य काव्येषु निपातानां सम्यगनुशीलनं तदीयकाव्यानामानुपूर्वीमपि प्रमाणेतरैः स्थापितां दृढं समर्थयति। तथा हि ऋतुसंहारमालविकाग्निमित्रादिषु मेघदूताभिज्ञानशाकुन्तलापेक्षया न्यूनव्यञ्जकोऽल्पसौष्ठवशाली च निपातप्रयोगस्तेषां काव्यानामापेक्षिकतया पूर्वभावित्वमल्पपरिपाकञ्चाविष्करोति। प्रथमं तावत्प्रसङ्गानुरोधेन निपातप्रकृतिमभिलक्ष्य किञ्चिद्विवेचनं प्रसक्तानुप्रसक्तमिति तदेवोपन्यस्यते।

'उच्चावचेष्वर्थेषु निपतन्ति'[1] इति व्युत्पत्त्या निपूर्वकात् पद् धातोः घञि निपात इति पदम्। भावप्रधानेभ्य आख्यातेभ्यस्सत्वप्रधानेभ्यश्च नामभ्य उपसर्जनीभूतेभ्यश्चोपसर्गेभ्यो विविक्ताः खल्विमे निपातास्ते हि पृथक् सत्तामावहन्तो वाक्ये कारकादिसम्बन्धानपेक्षयैव यथेच्छया यत्र तत्र निपातनान्निपाता इत्युच्यन्ते। यथाऽन्यैः पदजातैरर्थाभिधानं क्रियते तथैव निपातैरपि। अव्ययरूपाश्चेमे। न तु सर्वेषामव्ययानां निपातत्वमवगन्तव्यम्। कानि पुनः पदानि निपातसंज्ञाभाञ्जि इत्यत्र पूर्वे आचार्या एव प्रमाणम्। तैर्निपातत्वेन परिगणितानि पदान्येव निपातसंज्ञामर्हन्ति। आचार्यो यास्कः उपमार्थीयाः कर्मोपसंग्रहार्थीयाश्चेत्येवं निपातान् द्विधा विभज्य त्रयोविंशतिनिपातान् वर्णयति। माधवभट्ट ऋग्वेदप्रयुक्तानां संख्यां त्रिंशदधिकशतमाह।[2] किन्तु तत्र केचन शब्दा

१. निरुक्तम् १।२।१

२. ऋग्वेदानुक्रमणी ३।१।१-१२

द्रव्यार्थका इति तेषां निपातत्वेनाभिधानमसंगतमेव । तथाप्येतत्तावच्चिन्तनीयं यदियं निपातानां संख्या केवलं ऋग्वेदीयनिपातानामेव । इतरसंहितासु ब्राह्मणेषु लौकिकवाङ्मये चापरिगणिताः सर्वथा नूतना निपाता अपि दृग्गोचरता-मायान्ति । साधु किलाह तत्रभवानाचार्यश्शौनकः —

इयन्त इति संख्यानं निपातानां न विद्यते ।
वशात्प्रकरणस्यैते निपात्यन्ते पदे पदे ॥[1]

तथा च ऋक्प्रातिशाख्ये चोक्तम्—

निपातानामर्थवशान्निपातनादनर्थकानामितरे च सार्थकाः ।
नैषन्त इयत्ति सङ्ख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ॥[2]

निपाताश्चैमे काव्ये यथोचितं प्रयुज्यमाना व्यञ्जकाश्सन्तः काव्यरामणीयकतामभिवर्धयन्ति इत्यस्ति काव्यशास्त्रिणां स्पष्टं मतम् । तथा ह्याह आचार्यः क्षेमेन्द्र औचित्यविचारचर्चायाम्—

उचितस्थानविन्यस्तैर्निपातैरर्थसङ्गतिः ।
उपादेयैर्भवत्येव सचिवैरिव निश्चला ॥ इति ।

तत्र वृत्तिः—

'उपादेयैश्चाविभिर्निपातैरुचितपदविनिवेशितैः काव्यस्यार्थसङ्गतिरसंशया तत्सहायैरिव भवति'[3] इति । ध्वनिकारश्चाह—

निपातानां प्रसिद्धमपीह द्योतकत्वं रसापेक्षयोक्तमिति द्रष्टव्यम् ।[4]

अस्तु । एवं नाम सिद्धे निपातानामुपयोगित्वे सम्प्रत्यस्मिन् परिच्छेदे महाकविकालिदासप्रयुक्तानां केषाञ्चन प्रमुखानां निपातानां विश्लेषणं क्रियते ।

अथ

अथ अथनिपातप्रयोगानेव पूर्वं विमृशामः । निपातोऽयं प्रायेणानन्तर्यार्थे प्रयुज्यते । किञ्च—

ॐ कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

---

१. बृहद्देवता २।९२
२. ऋग्वेदप्रातिशाख्यम् १२।२६
३. औचित्यविचारचर्चा, कारिका २५
४ ध्वन्यालोक (आचार्यविश्वेश्वरसम्पादितः,) पृ० २०८

इत्यनयाऽभियुक्तोक्त्या अथशब्दो मङ्गलमपि शंसति। अर्थान्तरप्रयुक्तोऽथ-शब्दः श्रुत्या मङ्गलमारचयती' ति शाङ्करभाष्यानुसारेणाथशब्दो मङ्गलवाची। तेन च ग्रंथारम्भे सर्वारम्भेऽपि अथेति निपातः प्रयुज्यते। संवादेषु पुनरथेति पदं प्रश्नार्थकं तिष्ठति। तथा चोक्तम्—

मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इति।[१]

आनन्तर्ये मङ्गले च

कालिदासो यथावसरमतिसमीचीनतया निपातमिमं स्वकाव्येषु निवेशयति। बहुधा त्वसौ युगपदेवारम्भमानन्तर्यं मङ्गलं च व्यनक्ति। तथाहि—

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच॥[२]

अत्र प्रयुक्तोऽथेति शब्दः सर्गारम्भं निशानयनानन्तर्यं भाविन्या नन्दिन्याः प्रीत्या पुत्राशासनरूपं मङ्गलं चेति सर्वं समुपस्थापयति।

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम्।
निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दौहृदलक्षणं दधौ॥[३]

अथेतिपदमत्र गर्भधारणानन्तरमि'ति भावं प्रकटयति। गर्भधारणेन च मङ्गलमपि सूच्यते।

अथोपनीतं विधिवद् विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति॥[४]

अथशब्देनात्र उपनयनानन्तर्यं शिक्षारम्भः अवन्ध्ययत्नरूपमङ्गलं च सर्वं युगपदभिव्यञ्जितम्।

अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः॥[५]

---

१. अमर० ३।३।२४७
२. रघु० २।१
३. तत्रैव ३।१
४. तत्रैव ३।२६
५. तत्रैव ३।३३

आनन्तर्यं माङ्गल्यं चात्र अथपदेन सुप्रतिपादितम्।

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥[1]

अथशब्दश्चात्र सर्गारम्भं प्रस्थानानन्तर्यं विष्णुपदविगाहनरूपमङ्गलं च सममेवोपस्थापयति।

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम्।[2]

अत्र अथेत्यस्य प्रजापतेराविर्भावानन्तरमित्यर्थः। ब्रह्मदर्शनेन च मङ्गलमपि। एवञ्च—

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम्।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥[3]
अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम्।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥[4]

इत्युभयत्र आनन्तर्यं सर्गारम्भः मङ्गलं चाथशब्देन प्रकटीभवति। प्रायेण स्वयं निपातः कथावर्णनप्रसङ्गे आनन्तर्यभावमेव सूचयति। तथाहि—

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।[5]

इत्यत्र कुशलप्रश्नानन्तरमित्यर्थमथशब्दः प्रकटयति।

अथोरुदेशादवतार्य पादमाक्रान्तिसम्भावितपादपीठम्।[6]

स्मरवाक्यस्मरणानन्तरमित्यथशब्दस्यार्थः। एवमन्यत्रापि।

सत्यर्थे

क्वचित्तु सत्यर्थेऽप्यथशब्दः प्रयुक्तः। तथाहि कुमारसम्भवे—

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा।[7]

---

१. रघु० १३।१
२. कुमार० २।३
३. तत्रैव ६।१
४. तत्रैव ७।१
५. रघु० १।५९
६. कुमार० ३।११
७. तत्रैव ५।३०

इत्यस्मिन्नर्थेऽथेत्यनेन 'पार्वत्यां दुश्चरं तपश्चरन्त्याम्' इत्यभिप्रायोऽभिव्यज्यते ।

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।[1]

इत्यत्र शर्वे दारसजिघृक्षया पार्वतीं प्रति पदं कारिते सति इत्यथनिपातेन सूच्यते ।

पक्षान्तरे

निपातानामनेकार्थत्वनियमाद् अथशब्दः क्वचित्पक्षान्तरमाह । तथाहि—

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।[2]
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ।[3]

इत्युभयत्र पक्षान्तरे खल्वथशब्दः । अथवेति यावत् ।

प्रश्नार्थे

प्रश्नार्थकस्याथशब्दस्य प्रयोगस्तु रूपकसंवादेषु दृश्यते । तथाहि

अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।[4]
अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ।[5]
अथ केनेदानीमात्मानं विनोदयामि ।[6]
अथ कथ महाराजो गन्तुमिच्छति ।[7]
अथ मालाविकागतं कौलीनं किं श्रूयते ।[8]
अथ क्व तत्रभवती ।[9]

१. कुमार० ६।१५
२. रघु० २।४९
३. कुमार० ५।४५
४. शाकु० ५।१४।१५
५. तत्रैव ६।३०।३१
६. विक्रमो० २।२।३
७. तत्रैव ४।७४।७५
८. माल० ३।०।१
९. तत्रैव ३।६।७

निपातेतरसान्निध्येनाथेति निपातो भिन्नं किमप्यर्थं प्रकटयति कविकृतिषु।

यथा—

'अथ किम्'[1] इति स्वीकारे।
अथ तु[2] इति पूर्वतो व्यतिरेके।
अथ च[3] इति समुच्चये।
अथ वा[4] इति पक्षान्तरे विकल्पे वा।

**अथो**

मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ[5] इत्यमरोक्त्या अथेत्यस्य पर्यायत्वेन अथो इति निपातोऽपि वर्तते। नातिप्रसिद्धमपीमं निपातं कालिदासः कादाचित्कतया प्रयुङ्क्ते। तद्यथा—

ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः॥[6]

अपि च—

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम्।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत॥[7]

इत्युभयत्र अथोनिपात आनन्तर्यार्थे सम्प्रयुक्तः।

**अपि**

कालिदासीयकाव्ये अपि इति निपातोऽपि भूयसा नैसर्गिकत्वेन प्रयुक्तः। व्यञ्जकत्वमप्यस्य स्फुटमाविर्भवति। तथाहि—

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि॥[8]

---

१. शाकु० १।२३।२४; २।१६।१७
२. तत्रैव ५।२७
३. रघु० ८।५१
४. तत्रैव १।४; ८।४५; ८।४७; कुमार० ६।२४
५. अमर० ३।३।२४७
६. रघु० ७।१७
७. कुमार० ५।५२
८. रघु० ५।१७

इत्यत्र अपिशब्दस्तदेकधारणत्वसूचनार्थः इति हेमाद्रिः । अपिशब्देन चातकस्य जलदैकधारणत्व द्योत्यते इति चारित्रवर्धनः ।

> आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
> बद्धुं न सम्भावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥[1]

अत्र च 'अपिशब्दः प्रशंसार्थः' इति चारित्रवर्धनः ।

> सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।
> अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥[2]

अपिशब्देनात्र स्वेदलवस्य क्षणविनाशित्वं सूचितम् ।

आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुमनाः प्रतिसञ्जहार ।[3]

आकर्णकृष्टेषोः प्रतिसंहारो दुष्कर इत्यपिशब्दार्थः ।

> तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
> भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिन्दवः ॥[4]

अपिशब्दस्त्वेककालद्योतनार्थं इति हेमाद्रिपादानां मतम् ।

> येन रोषपरुषात्मनः पितुः शासने स्थितिभिदोऽपि तस्थुषा ।
> वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥[5]

अत्र खलु अपिशब्दादाज्ञालङ्घने प्रत्यवायं दर्शयती'ति हेमाद्रिपादाः ।
एवञ्च कुमारसम्भवे—

> अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
> कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥[6]

इत्यत्र 'अपिशब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते' इति मल्लिनाथपादाः ।

---

१. रघु० ७।६
२. तत्रैव ८।५१
३. तत्रैव ९।५७
४. तत्रैव ११।४
५. तत्रैव ११।६५
६. कुमार० ३।६

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥[१]

अपीतिपदेनात्र पार्वत्याः पुष्पाधिकसौकुमार्यं द्योत्यते ।

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥[२]

स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽस्ति । फलाशा तु दूरापास्ता इति भावोऽपिशब्देन स्फुटतामानीतः ।

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥[३]

अत्र खलु 'अपिशब्दात्करिकदलीमात्रस्य तादृक्परिणाहो नास्तीति भाव' इति मल्लिनाथपादाः ।

त्वं पितृणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥[४]

अपिसमुदायोऽत्र माहात्म्यं प्रकटयतितराम् । मेघदूते तद्यथा—

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।
कण्ठाश्लेषप्रणयिनि जने किम्पुनर्दूरसंस्थे ॥[५]

अत्रापिनिपातः खल्वपरपक्षस्य अन्यथावृत्तित्वप्राबल्यं द्योतयति ।

अन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ।[६]

इत्यत्र 'न केवलं बलभद्रः शुद्धोऽभवत् त्वमपि भावीत्यपेरर्थ' इति भरत-मल्लिकपादाः ।

छायास्माऽपि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।[७]

अत्र च 'अपिशब्दात्प्रवेशमनीच्छोरपीति भावः' इति सुबोधायां भरत-मल्लिकपादाः । ऋतुसंहारे तथा—

१. कुमार ५।१२
२. तत्रैव ५।६०
३. तत्रैव १।३६
४. तत्रैव २।१४
५. मेघ० १।३
६. तत्रैव १।५३
७. तत्रैव १।४४

प्रसह्यवातोद्धतरेणुमण्डला प्रचण्डसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः प्रियावियोगानलदग्धमानसैः ॥[1]

मही द्रष्टुमपि न शक्यते । गन्तुं न शक्यते इत्यत्र किं न वक्तव्यमित्यर्थः इति संजीवन्यामपिशब्दाभिव्यक्तिः ।

अभिज्ञानशाकुन्तले पुनः—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।[2]

नित्यसुखी अपि विरही भवतीत्यपिशब्दार्थः ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥[3]

प्रत्यक्षदर्शनं पुनरनुपपन्नमित्यपिशब्दध्वनिः ।

कथम् । चक्रवर्तिलक्षणमप्यनेन धार्यते ।[4]

इत्यत्र न केवलं महापुरुषलक्षणमित्यपिशब्दार्थः । मालविकाग्निमित्रे च—

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥[5]

इत्यस्मिन्नान्दीपद्ये अपीत्यस्य त्रिप्रयोगेण मनोहरो विरोधाभासो व्यक्तिमापन्नः ।

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥[6]

इत्यत्र पूर्वार्धगतापिपदेन मालविकाया अपि रतावधीरत्वं गम्यते । उत्तरार्धस्य च अपिः रक्ताशोकस्य दोहदपूर्तिं ध्वनयति

---

१. ऋतु० १।१०
२. शाकु० ५।२
३. तत्रैव ६।२२
४. तत्रैव ७।१५।१६
५. माल० १।१
६. तत्रैव ३।१६

शठ इति मयि तावदस्तु ते परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि तां विसृजसि मेखलयाऽपि याचिता ॥[१]

इति मालविकां प्रति अग्निमित्रस्योक्तावुपायान्तरस्यासाध्यता प्रकटीभवति । ननु या चरणपतितयापि कोपमवधीरणां वा न जहाति सा कथमन्यथा प्रसन्ना स्यादिति यावत् ।

अथ कः खल्वपिपदार्थं इति जिज्ञासायां प्रथमं तु पाणिनिरेव नः शरणम् । तथा हि—अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु[२] इति । अनन्तरं च कोशकारैरपि अपिशब्दस्य स एवार्थः कृतः । तद्यथा—

गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि इत्यमरः ।[३]
तथा युक्तपदार्थे च कामचारक्रियासु च इति विश्वः ।[४]

कालिदासेन चैतेष्वर्थेषु अपीतिनिपातस्य यथास्थानं प्रयोगो विहितः ।

गर्हायां यथा—

दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।[५]
दृष्टदोषमपि तन्न सोऽत्यजत्सङ्गवस्तु भिषजामनाश्रवः ।[६]
अलुब्धपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।[७]
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥[८]
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥[९]

अपिशब्देनात्र संश्रयाय विमुखस्य निन्दा कृता ।

---

१. माल० ३।२०
२. पा० १।४।६३
३. अमर० ३।३।२३६
४. विश्व० १८८।२६
५. रघु० ८।२
६. तत्रैव १९।४९
७. कुमार० ५।६८
८. तत्रैव ५।७२
९. मेघ० १।१७

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥[१]

अपिपदमत्र शैवलस्य च गर्हा या विद्यते । वल्कलेनापि तुच्छेन इति अपेरर्थः इति कुमारसम्भवटीकायां श्रीमद्रमेन्द्रमोहनवसुमतम् ।[२]

अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ।[३]

अपिशब्देनात्र इरावत्या राज्ञः निन्दा सूच्यते ।

समुच्चयार्थे—

प्रजानां विनयाधानाद्रक्षणाद् भरणादपि ।[४]
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ।[५]
कायेन वाचा मनसाऽपि शश्वद् यत्सम्भृतं वासवधैर्यलोपि ।[६]
सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।[७]
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥[८]
संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।[९]
भालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥[१०]

---

१. शाकु० १।१९
२. तत्रैव—रमेन्द्रमोहनवसुविरचिता कुमारसम्भवटीका, पृ० ६८
३. माल० ४।१५।१६
४. रघु० १।२४
५. तत्रैव १।९०
६. तत्रैव ५।५
७. तत्रैव १५।३१
८. मेघ० २।५३
९. तत्रैव २।४८
१०. कुमार० ३।५१

गणयत्यवदानविस्मितो
भवतः सोऽपि न सत्क्रियागुणान् ॥[1]
षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ।[2]
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥[3]

इत्यादिषु प्रसङ्गेष्वपिशब्दः समुच्चये सम्प्रयुक्तः ।

प्रश्नार्थे—

रघुवंशे यथा रघुः कौत्सं पृच्छति—

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीतानुमतो गृहाय ।[4]
अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि सम्भावयितुं वनान्माम् ।[5]

कुमारसम्भवे च पार्वतीं प्रति वटोरुक्तिः —

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।[6]
अपि स्वशक्त्या तपसि प्रवर्तसे ।[7]
अपि प्रसन्नं हरिणेषु ते मनः ।[8]

शाकुन्तले च दुष्यन्तः पृच्छति—

अपि सन्निहितोऽत्र कुलपतिः ।[9]
अपि तपो वर्धते ।[10]

अथ च सख्योः शकुन्तलां प्रति प्रश्नः —

हला शकुन्तले ! अपि सुखयति ते नलिनीपत्रवातः ।[11]

---

१. शाकु ७।१
२. विक्रमो० २।१
३. माल० ४।६
४. रघु० ५।१०
५. तत्रैव ५।११
६. कुमार० ५।३३
७. तत्रैव ५।३३
८. तत्रैव ५।३५
९. शाकु० १।१३।१४
१०. तत्रैव १।२३।२४
११. तत्रैव ३।६।७

गौतमी च शकुन्तलां कुशलं पृच्छति—

जाते ! अपि लघुसन्तापानि तेऽङ्गानि ।[१]

विक्रमोर्वशीये पुनः पुरूरवसः प्रश्नः—

अपि ज्ञायते कतमेन दिग्विभागेन गतः [redacted] जाल्मः ।[२]

भरतशिष्यो गालवः पृच्छति—

अपि गुरोः प्रयोगेण दिव्या परिषदाराधिता ।[३]

उर्वश्याः चित्रलेखां प्रति प्रश्नः—

अपि रोचते तेऽयं ममाल्पाभरणभूषितो नीलांशुकपरिग्रहोऽभिसारिकावेषः ।[४]

पुरूरवसो हरिणीपतिं प्रति प्रश्नः—

अपि दृष्टवानसि मम प्रियां वने कथयामि ते तदुपलक्षणं शृणु ।[५]

मालविकाग्निमित्रे यथा—

बकुलावलिका मालविकां कुशलं पृच्छति—

अपि सुखं सख्याः ।[६]

राजा च धारिणीं पृच्छति—

देवि ! अपि सह्या वेदना ।[७]

शंकायाम्—

क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ।[८]

इत्यत्र क्षुद्रसंरक्षणाशङ्का अपिपदेन सूच्यते ।

वनज्योत्स्ने ! चूतसङ्गतापि मां प्रत्यालिङ्ग इतोगताभिः शाखाबाहुभिः[९]

'अपि' इत्यनेनात्र अन्यबन्धुजनानां विस्मरणशङ्का सूचिता ।

---

१. शाकु० ३।२२।२३
२. विक्रमो० १।४।५
३. तत्रैव ३।०।१
४. तत्रैव ३।६।१०
५. तत्रैव० ४।६०
६. माल० ३।१०।११
७. तत्रैव ४।३।४
८. कुमार० १।१२
९. शाकु० ४।१२।१३

सम्भावनायाम्—

मनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।[1]

अपीतिनिपातेनात्र भयसम्भावना प्रदर्शिता ।

अपि प्रभुः सानुशयोऽधुना स्यात्किमुत्सुकः शक्रजितोऽपि हन्ता ।[2]

इत्यत्र अपिशब्दः सम्भावनायाम् ।

न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ।[3]

'अपि सम्भावनायाम्, योऽन्य इतरो जनः अहमिव यथाहं तथा पराधीनवृत्तिः परवशचेष्टो न स्यात् न भवेत् स क उपेक्षेतेत्यन्वयः । स्वच्छयाऽहं जायां नोपेक्षितवान् किन्तु प्रभोरस्वतन्त्रत्वादिति भावः ।' इति सुबोधटीकायां भरतमल्लिकपादाः ।

भूयश्चाहं त्वमपि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वनं विप्रबुद्धा ।[4]

अत्रापि अपिशब्दः सम्भावनायाम् । अपीत्यनेनात्र अहमित्यध्याह्रियते । अहं तु शयने आसं त्वमपि तत्रैव शयने आसीः, अहं कण्ठाश्लिष्टोऽभूवं त्वमपि कण्ठलग्ना भूः, अहं तु निद्रायामवर्ते त्वमपि निद्रावशंगता इति सर्वत्रापीतिपदेन गम्यते तदैव च खण्डितायाः स्वप्ने 'सान्तर्हासम्' इत्यस्य सङ्गतिः स्यात् ।

मालविकाग्निमित्रे इरावती च—

अपि सत्य एव लोकवादः ।[5]

इत्यत्र अपिपदेन लोकवादस्य सत्यतां सम्भावयति ।

'नाम' इति निपातेन युक्तोऽपिशब्दस्तु सर्वत्र सम्भावनायामेव कविकृतिषूपलभ्यते । तथाहि—

भवत्वनिष्टादपि नाम दुस्सहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।[6]

१. रघु० २।११
२. तत्रैव १४।८३
३. मेघ० १।८
४. तत्रैव २।५४
५. माल० ३।१२।१३
६. कुमार० ५।४२

अनिष्टादीदृशी मनस्विनीनां प्रतिपत्तिः सम्भवेदित्यर्थः ।

सम्भावनाप्रश्ने च अपि नाम इत्यस्य प्रयोगो रूपकेषु बहुशो दृश्यते । शाकुन्तले यथा—

**अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा स्यात् ।**[1]

इत्यत्र दुष्यन्तेन शकुन्तला असवर्णक्षेत्रसम्भवा सम्भाव्यते ।

**अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।**[2]

अत्र च दुष्यन्तो मृगतृष्णिकायाः सम्भावनां करोति । विक्रमोर्वशीये च—

**अपि नाम स राजर्षिरुद्धरति नो हृदयशल्यम् ।**[3]
**अपि नाम पुनरप्युपकारिणमेनं प्रेक्षिष्ये ।**[4]
**इदं तु चिन्तयामि अपि नामाहं पुरूरवः भवेयमिति ।**[5]
**अपि नामोर्वशी ।**[6]
**अपि नाम सा सुतनुरस्योपत्यकायामुपलभ्येत ।**[7]
**अपि नामैवं स्यात् ।**[8]

इति सर्वत्र अपिपदं सम्भावनायाम् ।

**आहो**

**आहो उताहो किमुत विकल्पे किं किमुत च**[9]
**आहो प्रश्ने विचारे च**[10] **इति मेदिनी ।**

उपर्युक्तकोशलब्धेष्वर्थेषु कालिदासः कथं सौन्दर्येण पदमिदं निदधाति स्वकाव्येष्विति शाकुन्तलीयेऽस्मिन् पद्ये दृश्यतां तावत्—

---

१. शाकु० १।२०।२१
२. तत्रैव ७।२०।२१
३. विक्रमो० १।५।६
४. तत्रैव १।१६।२०
५. तत्रैव ३।६।१०
६. तत्रैव ३।१४।१५
७. तत्रैव ४।४७।४८
८. तत्रैव ५।१६।२०
९. अमर० ३।४।५
१०. मेदिनी० १८०।११

दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥[१]

अत्र आहो इति निपातेन सुष्ठु पक्षान्तरमुपन्यस्तम् । यदि सत्यमेव स्वकीयान् दारान् त्यजामि तदा पापभाग् भवेयम् । अथ च परस्त्रीस्पर्शं करोमि तर्हि महत्पापं समाश्रयेन्माम् । तदत्र किं गुरुलाघवं स्यादितिविचारगर्भः प्रश्न आहोपदेन सूचितः ।

एवञ्च—

आहो स्विरप्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम् ।[२]

इत्यत्रापि 'आहो' इति निपातेन पक्षान्तरेण साकं वितर्कगर्भः प्रश्नोऽपि सुतरां सूच्यते ।

अत्यन्तमात्मसदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥[३]

इत्यत्र सम्यक् पक्षान्तरनिष्पत्तिर्युगपच्च कुतूहलगर्भः प्रश्नः समुपस्थापितः । एवमन्यत्रापि ।

इति

इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ।[४] इत्यमरः ।

हेतौ 'इति'—

न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ॥[५]

मागधी ह्रिया किञ्चिदीप्सितं न शंसति अस्माद्धेतोः प्रियासखीरनुवेलं पृच्छति स्म । 'इती'त्यत्र हेतौ ।

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥[६]

१. शाकु० ५।१९
२. शाकु० ५।१६
३. तत्रैव १।२५
४. अमर० ३।३।२४५
५. रघु० ३।५
६. कुमार० ४।२१

मदनेन विनाकृता रतिः क्षणमात्रं जीविता इति हेतोरिदं वचनीयं तु व्यवस्थितमित्यत्र 'इति' हेतावेव ।

मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ।[१]

मम गेहिन्याः प्रिय इति हेतोस्त स्मरामीत्यर्थः । अत्रापि हेताविति विद्यते ।

देव्या दत्त इति यदि व्यापारं व्रजसि मे शरीरेऽस्मिन् ।[२]

देव्या दत्त इति अस्मात्कारणात् यदि मे शरीरे व्यापारं व्रजसीत्यत्र 'इति' हेतौ ।

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥[३]

उत्सवदिवसेषु परिजनः बन्धं नार्हति इति अतो मयैते मोचिते इत्यत्र 'इति' हेतौ ।

प्रकारवचने 'इति'—

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥[४]

इति विज्ञापित एवं विज्ञापित इत्यर्थः ।

उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥[५]

उमा इति उ मा एवं तपसो निषिद्धा । अत्रेति पदं प्रकारवचने वर्तते ।

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ।[६]

इत्याख्याते एवमाख्याते इत्यर्थः ।

प्रकाशार्थे 'इति'—

दिलीप इति राजेन्दुरिन्दुः ।   ॥[७]

अत्र दिलीप इति प्रसिद्ध इति यावत्

पृ[illegible] [illegible] मुनिरिति श्रुतः   ॥[८]

---

१. मेघ०
२. विक्र०
३. माल०
४. रघु० १।
५. कुमार०
६. मेघ० [illegible]
७. रघु० १।१२
८. रघु० [illegible]

केवलं राजपूर्वो प्रसिद्ध इत्यर्थः ।

वीरसूरिति प्रसिद्ध इति यावत् ।[1]

शङ्कायाम् 'इति'—

पुराणमित्येव न साधु सर्वम् ।[2]

इति निपातेनात्र शङ्का सूच्यते । इति शङ्कायाम् इति मल्लिनाथपादाः । अवधारणे च इति यथा—

शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।[3]

इत्यत्र इतीतिनिपातोऽवधारणे प्रवर्तते ।

इव

इव इति निपातः सादृश्ये वर्तते । अतः कालिदासेन स्वकाव्येषु इवेनासंख्याता मनोहरा उपमा उत्प्रेक्षाश्च कल्पिताः । उपमा कालिदासस्य इतीयं लब्धातिशयप्रचारा भणितिरेव तदीयोपमानामनवद्यत्वं वैद्यां सौष्ठवमौचित्यमनितरसाधारणत्वञ्चाञ्जसाऽऽविष्करोति । उपमाग्रहणं स्वत्रोपलक्षणार्थमेव । तेन च सर्वेऽप्यौपम्यगर्भा अलङ्काराः कविवरेणानेनानुपमतया प्रयुक्ता इति नास्ति विसंवादावकाशः । एवं खलु तत्प्रयुक्तस्य इवेति निपातस्यौचित्यं नितरामाविर्भवति । तदीयोपमा अहोरात्रं सहृदयैरनुशील्यन्त एवेति नास्त्यवकाशस्तद्विवेचनस्य । परं निपातोऽयं क्वचित् नितान्तसौन्दर्यावह इत्यपि द्रष्टव्यं तावत्—

ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।
वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥[4]

स अजो वैदर्भनिर्दिष्टमन्तः चतुष्कं नारीमनांसीव प्राविशत् । अत्र मल्लिनाथपादास्तु उत्प्रेक्षामेव मन्यन्ते परं सुमतिविजयपादानां मते इवशब्दार्थोऽत्र सहार्थे व्याख्यायते । नारीमनोभिः सह चतुष्कमध्यं प्राविशत् इति । नारीमनांस्यपि विवेशेत्यर्थः । चतुष्कमन्तः प्रवेशेन साकं नारीमनांस्यपि प्राविशत् सौन्दर्यातिशयत्वादिति भावः ।

१. माल० ५।१६
२. तत्रैव १।२
३. कुमार० १।४१
४. रघु० ७।१७

एवमत्र इवेतिनिपातस्यौचित्यं सुविशदं प्रतिभासते ।

उ

उ सम्बोधनरुषोक्त्योरनुकम्पानियोगयोः ।[१]

इति सानुकम्पसम्बोधनवाचिना उ इति लघुनिपातेन ।

उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ।[२]

इत्युमापदस्य निर्वचनं कृत्वा कविः किमपि प्रत्युत्पन्नमतित्वं प्रकटयति ।

कच्चित्

कच्चित्कामप्रवेदने[३] इत्यमरः ।

कच्चिदिति निपातः कामप्रवेदने इष्टप्रियप्रश्ने वा प्रासङ्गिकतया प्रयुक्तो महती शोभामावहति । रघुवंशे यथा—

आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥[४]
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥[५]
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥[६]
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥[७]
नीवारपाकादि कडंगरीयैरामृश्यते जानपदैर्न कच्चित् ।[८]

इति पञ्चसु पद्येषु वरतन्तुशिष्यं कौत्सं प्रति रघोरिष्टप्रश्ने कच्चिदिति निपातः प्रयुक्तः ।

कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥[९]

इति मेघदूतीये पद्ये कच्चित् कामप्रवेदने वर्तते । प्रोषितभर्तृकाणां कृते पतिस्मरणादितरत् तद्गतप्रश्नानुयोगाद् ऋते च किं वा अभीष्टं जीवितसाधनं स्यादिति प्रश्नार्थे कच्चिदितिनिपातस्य प्रयोगः सर्वथा समीचीन एव । प्रश्नोऽयं

१. मेदिनी० अव्ययवर्गः ४-५
२. कुमार० १।२६
३. अमर० ३।४।१४
४. रघु० ५।५
५. तत्रैव ५।६
६. तत्रैव ५।७
७. तत्रैव ५।८
८. तत्रैव ५।९
९. मेघ० २।२६

तस्या अभीष्टतमोऽभूदिति च ध्वनिः । तथैव च—

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे[1]

इत्यादिष्वपि बोध्यम् ।

## किल

वार्तासम्भाव्ययोः किल[2] इत्यमरः ।
किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः [3] इति विश्वः ।
वार्तायामरुचौ किल[4] इति त्रिकाण्डशेषः ।

किलेतिनिपातो वार्तायामैतिह्ये प्रसिद्धाववधारणे तु बहुशः प्रयुक्त एव हेतौ सम्भावनायामरुचावलीकेऽप्यस्य यथोचितप्रयोगः प्रशंसनीयः ।

हेतौ 'किल'—

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥[5]

ब्राह्मे मुहूर्ते किल यतो देवी कुमारं सुषुवे इत्यत्र किल हेतौ विद्यते ।

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥[6]

किल तस्माद् हेतोरित्यर्थः ।

सम्भावनायां 'किल'—

छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥[7]

अत्र किलेति सम्भावनायामिति मल्लिनाथपादाः ।

---

१. मेघ० २।५७
२. अमर० ४।३।२५४
३. विश्व० १६१।६१
४. त्रिकाण्ड० ३।३।४६७
५. रघु० ५।३६
६. तत्रैव १५।३२
७. तत्रैव ४।५

आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥[१]

पक्षान्तरसम्भावनायामत्र 'यदि किल' इति प्रयुक्तम्। पक्षान्तरे चेद्यदि च इति यदिपदार्थः। 'वार्तासम्भाव्ययोः किल' इति च किलपदस्याशयः तेनैव च 'वाताः' 'एभिः' इत्येतौ बहुवचने प्रयुक्तौ। अयं भावो यदहमुत्तरदिशः समागच्छन्तं प्रत्येकं वातमनया सम्भावनया आश्लेषयं स्यामयमेव तवाङ्गस्पर्शं प्रथममवाप्त' इति टीकाकृतां भरतमल्लिकपादानां मते किलेत्यस्य सम्भावनायां प्रयोगः।

'वयस्य! साधु मनसा समर्पिता आपत्प्रतीकारः किल प्रमोद्यानप्रवेशः तच्चान्यथैवोपपन्नम्।[२]

इत्यस्मिन् पुरूरवसः उक्तौ किलेति सम्भावनायाम्। प्रमोद्यानप्रवेश आपत्प्रतीकारः किल आपत्प्रतीकारो भवेदिति सम्भावना।

अलीके 'किल'—

प्रसह्य सिंहः किल तां चकर्ष।[३]

इत्यत्र किलेत्यनेनाद्धा सिंहस्यालीकत्वं सुष्ठु द्योत्यते। नन्दिनीमायारचितः सिंहस्तामाक्रम्य स्थित इति भावश्चाविर्भवति। इत्थं च किलेति लघुतरेण पदेनैव कदाचिन्नन्दिनी दिलीपस्यान्तर्भावं भक्तिं वा परीक्षितुकामा मायया सिंहमुत्पाद्य तेन चात्मन्याक्रमणं दर्शयित्वा दिलीपः स्वप्राणार्पणेन मां रक्षति न वेति परीक्षयामासेति सर्वं प्रकटीभवति।

तपः किलेदं तदवाप्तिसाधनम्।[४]

इत्यत्रापि 'किल' अलीके वर्तते। अतितुच्छत्वादसाधकमेवेत्यर्थः इति मल्लिनाथपादाः।

अरुचौ 'किल'—

तस्य प्रसह्य हृदयं किल शोकशङ्कुः प्लक्षप्ररोह इव सौधतलं बिभेद।
प्राणान्तहेतुमपि तं भिषजामसाध्यं लाभं प्रियानुगमने त्वरया स मेने ॥[५]

१. मेघ० २।५०
२. विक्रमो० २।४।५
३. रघु० २।२७
४. कुमार० ५।६४
५. रघु० ८।९३

शोकशङ्कुस्तस्य हृदयं प्रसह्य किल बिभेद इत्यत्रारुचौ किल विद्यते। एवञ्च—

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ॥[1]

ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन्॥[2]

कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे॥[3]

इत्येषु रघुवंशीयपद्येषु किलेत्यरुचावेव। कुमारसम्भवे च—

स्फुरदुदर्चि सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात।[4]

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे॥[5]

इत्युभयत्र किलेत्यरुचौ वर्तते। शाकुन्तले यथा—

कुतः किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि।[6]

इति विदूषकवचने किलेत्यरुचौ।

न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च।[7]

इत्यत्र कञ्चुकिकथनेऽपि किलपदमरुचावेव।

अनपत्यश्च किल तपस्वी।[8]

अत्रापि किलेत्यरुचावेव। विक्रमोर्वशीये च—

---

१. रघु० १२।५
२. तत्रैव १२।२२
३. तत्रैव १४।३३
४. कुमार० ३।७१
५. तत्रैव ४।२१
६. शाकु० २।२।३
७. तत्रैव ६।३।४
८. तत्रैव ६।२२।२३

(सकरुण) उर्वशी किल तं रतिसहायं राजर्षिममात्येषु निवेशितराज्य-धुरं गृहीत्वा गन्धमादनवनं विहर्तुं गताः ।[1]

प्रणिधानस्थितया चित्रलेखया उर्वशीगतमत्याहितमुपलभ्य किलेतिपदमत्र साभिप्रायमरुच्यर्थं प्रयुक्तम् ।

अन्यत्रापि—

गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।[2]

इति तापसीकथने किलशब्दोऽरुच्यौ विद्यते ।

मालविकाग्निमित्रेऽपि—

अत्रभवतः किल मम च समुपस्थयोरिवान्तरमिति तत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु ।[3]

इत्यस्मिन्वाक्ये हरदत्तेन गणदासकथने अलीकत्वारोपणं किलेतिनिपातेन सुतरां युज्यते ।

सखि, बहुशः किल भर्ता विप्रलब्धः ।[4]

न भर्ता त्वया पुनर्विप्रलब्धव्य इति किलपदेनैवात्र व्यज्यते ।

अवधारणे 'किल'—

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।[5]

नैवानुययुरित्यर्थः ।

असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥[6]

किलेत्ययमावधारणे प्रयुक्तः । नित्यचन्द्रिकाविहारत्वमेतस्यैव नान्यस्येति भावः ।

सस्पुस्ते [illegible] किल शतक्रतोरजय्यस्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।[7]

---

१. विक्रमो० ४।२।३
२. तत्रैव ५।१०।११
३. माल० १।१२।१३
४. तत्रैव ४।११।१२
५. रघु० १।२७
६. तत्रैव २।५३
७. तत्रैव ६।३४

अत्रापि किलेतिपदं दानवगणस्याजय्यत्वावधारणार्थं प्रयुक्तम् ।

वार्तायां 'किल'—

वार्तायामैतिह्ये वा तु किलेतिपदं बहुशः प्रयुक्तम् । यथा—

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।[1]

एवञ्च—

स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥[2]
कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥[3]
स भूय वज्राकरभूषणायाः पतिः पृथिव्याः किल वज्रणाभः ।[4]

इत्यादिषु किलेति वार्तायामेव विद्यते ।

शाकुन्तले च किलेति वार्तायां यथा—

शृणोत्वार्यः गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नाम अप्सराः प्रेषिता नियमविघ्नकारिणी ।[5]

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।[6]

एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतिरां न गृह्णाति ।[7]

विक्रमोर्वशीयेऽपि यथा—

या किल स्त्री इमं प्रदेशं प्रविशति सा लताभावेन परिणंस्यतीति ।[8]
सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेव ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥[9]

१. शाकु० ६।३०
२. रघु० ९।१९
३. तत्रैव ११।१
४. तत्रैव १८।२१
५. शाकु० १।२३।२४
६. तत्रैव ६।१
७. तत्रैव ७।२०।२१
८. विक्रमो० ४।७२।७३
९. तत्रैव ५।१०।११

मालविकाग्निमित्रे च—

चेटि निपुणिके ! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति ।[1]

ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिका गता ।[2]

अथ किल देव्यैवं पण्डितकौशिकी भणिता[3]

इति सर्वत्र किलेति वार्तायामेव ।

ऐतिह्ये 'किल'—

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥[4]
त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा सः ।
वक्षःस्थलव्यापि रुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥[5]
तरसः किल दुश्चरं सपत्नतृणबिन्दोः परिशङ्कितः पुरा ।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् ॥[6]
गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥[7]

इति रघुवंशीयपद्येषु किलेत्यैतिह्ये विद्यते ।

व्याजे 'किल'—

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ॥[8]

इत्यत्र 'किल' व्याजे वर्तते । यद्यपि किमपि विशिष्टं कथयितव्यं नाभूत् तथापि तवाननस्पर्शलोभात् किञ्चिद् ब्रुवन्निव तव श्रोत्रं निकषा नैजमाननमानयमिति गम्यते ।

---

१. माल० ३।१२।१३
२. तत्रैव ४।१२
३. तत्रैव ४।१।२
४. रघु० ३।३९
५. तत्रैव ६।४९
६. तत्रैव ८।७९
७. तत्रैव १३।३
८.

खलु

खल्विति निपातस्य प्रयोगस्तु सर्वाधिको विद्यते। प्रायेण त्वस्य प्रयोगो वाक्यालङ्कारे कृतो दृश्यते कविभिः। कालिदासस्तु विभिन्नेष्वर्थेष्विमं प्रयुङ्क्ते।

हेतौ 'खलु'—

तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः॥[1]

तदिदं गतमीदृशीं दशां न विदीर्यं कठिनाः खलु स्त्रियः।[2]

अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम्॥[3]

कार्यप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति॥[4]

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥[5]

प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा। अस्याः खलु—[6]

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः॥[7]

एवं वक्तुकामोऽस्मि—मा भवानङ्गानि मुञ्चतु। दृढं खलु त्वयि बद्धभावा उर्वशी न सा इतोगतमनुरागं शिथिलयति इति।[8]

बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बितो भवान्। समयः खलु स्नानभोजनं सेवितुम्।[9]

स्यादेवम्। अतः खलु।[10]

---

१. रघु० १२।६६
२. कुमार० ४।५
३. तत्रैव ५।३३
४. तत्रैव ७।६३
५. मेघ० २।२०
६. शाकु० १।१६।२०
७. तत्रैव २।१६
८. विक्रमो० २।२७।१८
९. तत्रैव २।२१।२२
१०. तत्रैव ५।८।३

नैतदेवम् । पण्डितकौशिकी खलु भगवती पक्षपातिनावह देवी च ।[1]

तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका ।[2]

तस्माद् हेतोरित्यर्थकः खलुशब्दः ।

अवधारणे 'खलु'—

एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ।[3]

अनास्था खलु अनास्था एवेत्यर्थः ।

विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ।[4]

विदितं खलु विदितमेवेत्यर्थः ।

स्थाने खलु विस्मृतिनिमेषेण चक्षुषा प्रियामवलोकयामि ।[5]
भगवन् वरः खल्वेषः । नाशीः ।[6]
पावकः खलु वचनोपन्यासः ।[7]
उत्सर्पिणी खलु महतां प्रार्थना ।[8]
उपकृतं खलु दानवेन्द्रसंरम्भेण ।[9]
अनुत्सेकः खलु विक्रमालङ्कारः ।[10]
अनुग्रहः खल्वयं नोपरोधः ।[11]
अहो कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका ।[12]
अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः ।[13]

---

१. माल० १।१५।१६
२. तत्रैव ४।१५।१६
३. रघु० २।५७
४. कुमार० १।५३
५. शाकु० ३।१२।१३
६. तत्रैव ४।७।८
७. तत्रैव ५।१६।१८
८. शाकु० ७।१२।१३
९. विक्रमो० १।९।१०
१०. तत्रैव १।१७।१८
११. तत्रैव ३।१२।१३
१२. माल० ४।६।७
१३. तत्रैव ५।१४।१५

साधारणः खलु तासां मम चायमभ्युदयः ।[1]

इत्यादिषु सर्वत्र खलुनिपातोऽवधारणे प्रयुक्तः ।

जिज्ञासायां 'खलु'—

न खलूग्रया पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ।[2]

इत्यत्र 'जिज्ञासानुनये खलु' इत्यमरोक्तिं प्रदाय मल्लिनाथपादा अपि जिज्ञासायामेव खलुपदं मन्यन्ते । स ते सखा मधुरप्यस्मिन्क्षणे न दृश्यते सोऽपि तव गतिं न खलु प्रापित इति कामपत्न्या जिज्ञासा सूच्यते खल्विति पदेन ।

शून्यं खल्विदम् ।[3]

न कोऽप्यत्र दृश्यते । कुत्र खलु तिष्ठति माढव्यः । कुत्र वा विद्यते स कुणपाशन इति दुष्यन्तस्य जिज्ञासां सूचयति खलुशब्दः ।

वयस्य न खलु दूरं गता देवी ।[4]

देवी समीपे तु न तिष्ठति, दूरं गता न वेति पुरूरवसो जिज्ञासा खलुपदेनावगम्यते ।

किन्नु खलु, को न खलु, क्व न खलु इत्यादिषु वितर्कगर्भप्रश्नेषु जिज्ञासाप्राबल्यसूचकाः खलुशब्दास्तथाहि—

अनसूये ! को नु खल्वेष चतुरगम्भीराकृतिर्मधुरं प्रियमालपन्प्रभाववानिव लक्ष्यते ।[5]

किन्नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् ।[6]

शकुन्तलामनोभावं ज्ञातुं प्रबलेच्छा दुष्यन्तस्य हृदि विद्यते ।

किन्नु खल्वार्यपुत्रो भणति ।[7]

---

१. माल० ५।१७।१८
२. कुमार० ४।२३
३. शाकु० ६।२७।२८
४. विक्रमो० ३।१४।१५
५. शाकु० १।२३।२४
६. तत्रैव १।२८।२६
७. तत्रैव ५।१६।१७

इत्यत्र शकुन्तलाया मनसि दुष्यन्तस्य प्रतिक्रियार्थं जिज्ञासा खलुनिपातेन द्योत्यते ।

किन्नु खलु स्यात् ।[१]

नेपथ्ये 'आश्चर्यं आश्चर्यमि'त्याकर्ण्य दुष्यन्तस्य हृदि तत्कारणं ज्ञातुमीहा प्रबला खलु ।

का नु खलु धन्या स्त्री या अनेन प्रार्थ्यमानात्मानं कृतार्थयति ।[२]

इत्यत्र सेर्ष्यमुर्वशी जिज्ञासते ।

को नु खल्वेष सवाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति ।[३]

अत्रापि खलुपदमुर्वश्या जिज्ञासाप्राबल्यसूचकम् ।

किन्नु खलु साम्प्रतं भर्ता भणति ।[४]

इति मालविकाया उत्कटा जिज्ञासा खलुपदेन सूचिता । एवमन्यत्रापि ।

अनुनये 'खलु'—

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् ।[५]
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।

खलुनिपातेनात्र वैखानसकृतोऽनुनयः सूच्यते ।

मा खलु चापलं कुरु ।[६]

अत्रापि तापसीभ्यां सानुनय निषेधः खलुपदेन बोध्यते ।

सखि ! मदनः खलु त्वामाज्ञापयति । तच्छीघ्रं नय मां तस्य सुभगस्य वसतिम् ।[७]

---

१. शाकु० ५।२६।३०
२. विक्रमो० २।६।३
३. तत्रैव ५।११।३
४. माल० ५।११।१२
५. शाकु० १।१०
६. तत्रैव ७।१३।१४
७. विक्रमो० ३।६।३०

खलुपदमत्र उर्वश्याः सखीं प्रति सानुनयनिवेदनं सूचयति ।

न खलु कुपितेदानीं त्वम् ।[१]

वकुलावलिकायाः मालविकां प्रति सानुनयप्रश्नः खलुशब्देन बोध्यते ।
सान्त्वने 'खलु'—

अथवा भवितव्यता खलु बलवती ।[२]
भोः किमेतत्? अनुपपन्नं खल्वीदृशं त्वयि ।[३]

इति शकुन्तलाविरहसन्तप्तहृदयं दुष्यन्तं प्रति विदूषकस्य सान्त्वनायां खलुपदस्यौचित्यं स्पष्टम् ।
पूर्वापेक्षायां 'खलु'—

अनुदिवसं खलु परिहीयसेऽङ्गैः ।[४]

पूर्वं स्वभावत एव कृशा, अधुना ततोऽपीति भावः ।
काकुप्रश्ने 'खलु'—

खल्वक्षिदुःखितोऽभिमुखे दीपशिखां सहते ।[५]

दीपशिखां सहते किम् इति काकुः । न सहते इति भावः ।

एवं भावविशेषान् सूचयितुमेव कविना खलुनिपातस्य प्रयोग उपात्तः । रूपकेषु मनोभावा अभिनयेन साकं शब्दैरपि स्पष्टीकरणमपेक्षन्ते इति हेतोर्निपातानां यथोचितप्रयोगैर्एतत्कार्यं सम्यक् सम्पद्यते । कालिदासश्चात्र नितरां निपुणः । अत एवासौ पद्यकाव्यापेक्षया ईदृशानां निपातानां प्रयोगं रूपकेष्वधिकं करोति । खलुनिपातस्य तु विशेषतः । यः खलु शब्दशास्त्रानभिज्ञः स खल्वीदृशानां निपातानां प्रयोगं वाक्यभूषामात्रं पदपूरणार्थकं वा मन्यते । परं यः काव्यरसमर्मज्ञः स सुतरां जानाति यन्नाय कविः क्वचिदपि निपातं निरर्थकं प्रयुङ्क्ते ।

एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।[६]

---

१. माल० ४।६।१०
२. शाकु० ६।८।६
३. तत्रैव ६।८।६
४. तत्रैव ३।७।८
५. विक्रमो० २।२१।२२
६. शाकु० ७।१४।१५

इत्यस्मिन् सर्वदमनं प्रति प्रयुक्ते तापसीवाक्ये खलुपदेन वाक्यभूषया सह निश्चयस्यावधारणस्य वा भावोऽपि विद्यते। यदेन न मुञ्चसि निश्चय त्वां केसरिणी लङ्घयिष्यतीति खलुपदेन स्पष्टीभवति। अपि चात्र खलुशब्दः सिंह-शिशुदन्तान् गणयितुमिच्छतः सर्वदमनस्य कृते समीपस्था केसरिणी सूचयितु सहायकः।

च

*चान्वाचयसमाहारेतरेतरसमुच्चये।*[1]
*च पादपूरणे पक्षान्तरे हेतौ विनिश्चये।*[2]

इति प्रभृतिषु कोशप्रतिपादितेष्वर्थेषु कालिदासेन प्रयुज्यमानः च इति निपातः सर्वथा व्यञ्जको विद्यते। तथाहि—

प्रथमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः॥[3]

इत्यस्मिन्पद्ये लघुतमेन 'च' इति निपातेन व्यथाया असह्यता ध्वन्यते। निपातोऽयमत्र द्विः प्रयुक्तः। तेन विरहेण समं काकतालीयन्यायेन समुपागतो वृष्टिकालः क्षते क्षारं निक्षिपतीति सूच्यते।

तुल्यकालद्योतकं चद्वयमन्यत्रापि द्रष्टव्यं तद् यथा—

विपावलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत्।
वशिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी॥[4]

द्वौ चकारौ तुल्यकालापेक्षा गम्येते इति वल्लभपादाः। द्वौचकारावविलम्ब-सूचकौ इति *मल्लिनाथपादाः।*

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः।[5]

अत्र द्वौ चकारौ तुल्यकालं गमयतः इति हेमाद्रिपादाः।

---

१. अमर० ३।३।२४१
२. त्रिकाण्ड० ३।३।४६५
३. विक्रमो० ४।३
४. रघु० ३।४०
५. तत्रैव १०।६

इत्यत्रापि चद्वयमुभयप्राधान्यार्थम् ।

विरोधगमकं चद्वयम्—

न सुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् ।[1]

'चकारद्वयोरुपादानमुभयोर्विरोधगमकम्'इति मल्लिनाथपादाः ।

*अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।*
*वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥*[2]

इति नृपस्योक्तौ चकारेणैकतस्तु विलासाभिवर्धनमपरतश्च कोपकरणमित्यनयोरतिशयविरोधित्वमनौचित्यसङ्गतिश्च प्रकटीक्रियते ।

विनिश्चयोत्कर्षे 'च'—

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।
वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥[3]

चकारपञ्चकेनात्र विनिश्चयोत्कर्षो द्रष्टव्यः खलु ।

अप्यर्थे 'च'—

वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥[4]

त्वमस्त्र सर्वतोगामि अपि साधकमपि इत्यर्थः ।

*नूनमसौत्य हरितो हरींश्च वर्तन्ते वाजिनः ।*[5]

हरितो हरीनपीत्यर्थः ।

यद्यर्थे 'च'—

सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥[6]

इत्यत्र चो यद्यर्थे । उपास्यो जनश्चेत् कुपितो दासस्तर्हि कथ निरपराध इति भावः ।

---

१. विक्रमो० २।६
२. माल० ३।२२
३. कुमार० २।१५
४. तत्रैव ३।१२
५. शाकु० १।८।६
६ वि ो० २।२०

हेतौ 'च'—

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।[1]

अत्र चशब्दो हेतौ निपातानामनेकार्थत्वात् । यतः शकुनत्रयमीदृ
अतस्तां मत्प्रियां त्वमवश्यं द्रक्ष्यसि इति भरतमल्लिकपादाः ।

समुच्चयार्थे 'च'—

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजा परीतं कलभाषिणि मां च पीडयितुम् ॥[2]

इह युवती चकारः समुच्चयार्थकः मालविकाचरणनृपान्तःकरणयोः सम
तत्त्वेन पीडां द्योतयति ।

एवं खलु समुच्चयार्थे वा अन्वाचयार्थे वा अन्यस्मिन् कस्मिंश्चिद
वा प्रयुज्यमानश्चकारः किमपि विशिष्टं ध्वनयति कालिदासीयकाव्येषु ।

तु

तु स्याद् भेदेऽवधारणे[3] इत्यमरः ।
तु पादपूरणे भेदे समुच्चयेऽवधारणे ।
पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे ॥[4] इति मेदिनी ।

भेदे 'तु'—

यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।[5]
कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥[6]
अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥[7]

---

१. मेघ० १।६
२. माल० ४।३
३. अमर० ३।३।२४२
४. मेदिनी० १८०।१६
५. रघु० ३।४८
६. तत्रैव ४।१३
७. तत्रैव ९।१०

दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥[१]
प्रवृद्धो हीयते चन्द्रः समुद्रोऽपि तथाविधः।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी ॥[२]
चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥[३]
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते।[४]

इति सर्वत्र 'तु' भेदे प्रयुक्त। अपि च—

प्रतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥[५]
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥[६]

अस्तु तावदेवं यथा भवानाह। पुत्रसंवरणे तु किमिव कारणं तत्रभवत्याः।[७]

इत्यादिषु 'तु' भेद एव।

अवधारणे 'तु'—

इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥[८]

रुद्रौजसा तु रुद्रौजसा एवेत्यर्थः।

त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥[९]

---

१. रघु० १५।७२
२. तत्रैव १७।७१
३. कुमार० १।४३
४. तत्रैव ५।४६
५. शाकु० ५।८
६. तत्रैव ७।३२
७. विक्रमो० ५।७।१९
८. रघु० २।५४
९. तत्रैव ८।६०

ते तु स्वरसङ्गम एव सुखकारिणो नान्यथेति भावे 'तु' अत्रावधारणे विद्यते ।

शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥[१]

'तु' इत्यत्राप्यवधारणे ।

श्रेयसामुपदेशात्तु वयमत्रांशभागिनः ॥[२]

उपदेशात्तु उपदेशादेवेत्यर्थः ।

समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥[३]

युवतिषु ग्रीष्मस्यैवं सुभगमपराद्धं न तु नैवेत्यर्थः । एवञ्च—

कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम् ।[४]

न तु स्मरामि नैव स्मरामीत्यर्थः ।

उपचारविधिर्मनस्विनीनां न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥[५]

न तु नैवेत्यर्थे तु अवधारण एव ।

समुच्चये 'तु'—

तैस्त्रयाणां शितैर्बाणैर्यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ॥[६]

रुधिरं तु रुधिरञ्चेत्यर्थे तुनिपातोऽत्र समुच्चयार्थे प्रयुक्तः । कथं तु इत्येवात्र युज्यते कथन्न 'च' इति निपातस्य प्रयोगो विहित इति प्रश्ने स्पष्टमिदं प्रतिभाति यत्कविः समुच्चयेन सहैवान्यदपि किञ्चित् तुनिपातेनाभिव्यञ्जयितुमिच्छति यच्चशब्देन न सम्भाव्यते । बाणास्तथा वेगेन देहं विभिद्य निर्गता यद् रुधिरस्पर्शोऽपि नाभवत् । ते च यथापूर्वविशुद्धयः स्थिताः । तैस्तु केवलमायुरेव पीतं न तु रुधिरं तत्तु पतत्रिभिः पीतम् । एवमत्र समुच्चयेन सहैव पक्षान्तर-

१. रघु० ३।६२
२. कुमार० ६।७४
३. शाकु० ३।७
४. विक्रमो० ४।२६
५. माल० ३।३
६. रघु० १२।४८

मपि तुनिपातः प्रकटयति यदन्येन केनापि समुच्चयार्थकेन निपातेन न शक्यते । तुनिपात एवात्र तथा सर्वाधिकं संयुज्यते ।

एवञ्च–

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।[1]

इत्यत्र हरस्तु हरोऽपीत्यर्थे तुनिपातः समुच्चयार्थे प्रयुक्तः । कथञ्चात्र हरोऽपि किञ्चित्परिलुप्तधैर्य इति नोक्तम् हरस्तु किञ्चित्परिलुप्तधैर्य इति वक्तव्ये तुनिपातस्यैव प्रयोगे को विशेष इति प्रश्ने विचार्यते यत्तुनिपातोऽत्र समुच्चय भेदं चोभयार्थं युगपदेवाभिव्यनक्ति । न तु प्राकृतजनवदत्यन्तलुप्त-धैर्य इति भाव इति मल्लिनाथपादा अपि । एव यत् तुपदेन सम्भाव्यते न तद-पिपदेनान्येन वा केनापि समुच्चयार्थकेन निपातेन ।

नाकरोदपकुतूहलं ह्रिया शंसितुं तु हृदयेन तत्वरे ॥[2]

तु अत्रापि समुच्चये ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥[3]

अत्र तुनिपातः समुच्चयेन सह पक्षान्तरमपि प्रकटयति । बाष्पस्तु इत्यस्य स्थाने बाष्पोऽपि 'बाष्पश्चे'ति वा प्रयोगो न कवेरभीष्टः । तुपदस्य प्रयोगो राज्ञः मानसिकीं व्यथां विरहदौर्बल्यमसहायत्वं वा ध्वनयति । अपिपदेन चपदेन वा न तद्ध्वन्यते यत्तुपदेन ।

न चकार शरीरमग्निसात्सह देव्या न तु जीविताशया ॥[4]

न तु जीविताशया न पुनर्जीविताशयेत्यन्वयः ।

आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥[5]

न तु तावद् न पुनस्तावद् इत्यर्थः ।

न तु सुरतसुखेभ्यश्छिन्नतृष्णो बभूव ।[6]

---

१. कुमार० ३।६७
२. तत्रैव ८।१०
३. शाकु० ६।२२
४. रघु० ८।७२
५. कुमार० ८।८०
६. तत्रैव ८।९१

न तु न पुनरित्यर्थः ।

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।[1]

मनस्तु मनः पुनरित्यर्थे तु अत्र पक्षान्तरमाह ।

अस्माकं तु प्रतिदिनमियं साधयन्ती प्रतिष्ठां
सेवाकारा परिणतिरभूत्स्त्रीषु कष्टोऽधिकारः ॥[2]

अस्माकं तु अस्माकं पुनरित्यर्थः ।

सर्वं भामनु ते प्रियाविरहजां त्वं तु व्यथां माऽनुभूः ।[3]

अत्रापि तुपदेन पक्षान्तरमाह । सकलं मम सदृशमेव ते अनुभूयते । केवलं चाहं प्रियाविरहजां वेदनामनुभवामि । त्वं पुनर्माऽनुभूरित्याशीः ।

पश्चात्तापे 'तु'—

मुहुरंगुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥[4]

अत्र तुपदेनानुतापः प्रकटीभवति तावता (चुम्बनेन) च कृतकृत्यता स्यादिति भावः कश्चन ध्वन्यते ।[5]

एवं 'तु' इति लघुनिपातः क्वचिद् भेदे क्वचिदवधारणे क्वचित्समुच्चये क्वचित्पक्षान्तरे अन्यत्र चानुतापे प्रयुक्तः स्वाभिव्यक्तिं सुतरां पुष्णाति कविकृतिषु ।

न न

भावप्रावल्यार्थं विच्छित्तिविशेषार्थं च कालिदासो बहुशो विध्यर्थं घटयितुं नञ्द्वयस्य प्रयोगं विदधाति । तथा चाधिकारसूत्रम्—

स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वयप्रयोगः सिद्ध इति ।

तथाहि—

न च न परिचितो न चाप्यगम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ॥[6]

१. शाकु० ३।१
२. विक्रमो० ३।१
३. तत्रैव ४।४७
४. शाकु० ३।२३
५. ध्वन्यालोकः (आचार्यविश्वेश्वरकृतव्याख्या, पृ० २०४)
६. माल० १।११

इति मालविकाग्निमित्रे हरदत्तोक्तौ नञ्द्वयेनातीव चमत्कारिकतया विध्यर्थो घटितः। द्वौ निषेधौ प्रकृतमर्थं गमयत इति वृद्धा। विध्यर्थ एवाभिप्रेतश्चेत्तर्ह्येव न साक्षादेवाभिहितः। सत्यम्। नन्वेतदेव खलु कवेर्निपातप्रयोगौचित्यम्। नञ्द्वयघटितविध्यर्थोऽवधारणार्थं निश्चयार्थञ्चाप्याह। विच्छित्त्युपचयञ्च कञ्चिदुपजनयति। नचतुष्टयेन चात्राऽनुप्रासोऽपि।

एवमन्यत्रापि यथा—

नासौ न काम्यो न च वेद स॰ ... न सा भिन्नरुचिर्हि लोकः

असौ काम्यो न इति न, काम्य ए॰ ... द्रष्टं न वेद ... न,

एवेत्यन्वयः।

दृष्टा जनेन समदुःखसुखेन ...
नेयं न वक्ष्यति ...

इयं शकुन्तला मनोगतमाधिहेतुं न

तस्योत्सङ्गे प्रणयिन इव
न त्वं दृष्ट्वा न पुनरलकां

त्वमलकां दृष्ट्वा न ज्ञास्यसे इति
नञ्द्वयं विध्यर्थं घटयितुमेव प्रयुक्तम्।

ननु

प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु
इत्यमरकोशलब्धेषु प्रायशः सर्वेष्व॰

तद्यथा—

प्रश्ने 'ननु'—

ननु भवानपि

इति विदूषकस्य प्रश्नो ...

ननु ...

---

१. रघु० ६।३०
२. शाकु० ३।९
३. मेघ० १।३७
४. अमर० ३।३।२४८
५. विक्रमो० २।२।३
६. माल० १।१५।१६

इति परिव्राजिकां प्रति राज्ञः प्रश्नो मालविकाग्निमित्रे ।

ननु गौतमवचनमप्यार्यो हृदये करोति ।[१]

इति देव्या धारिण्याः प्रश्नः ।

एवञ्च—

आर्य गणदास ! ननु दर्शितोपदेशा ते शिष्या ।[२]
ननु तत्रैव देवी तिष्ठति ।[३] इत्यादिषु ।

अवधारणे 'ननु'—

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥[४]

यस्यापदां त्वं प्रतिहर्ता तस्य मे सप्तस्वङ्गेषु शिवमुपपन्नं ननु उपपन्नमेवेत्यवधारणे ननुनिपातः ।

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥[५]

तैलनिषेकबिन्दुना सह दीपार्चिर्मेदिनीमुपैति ननु उपैत्येव । नन्वत्रावधारणे इति मल्लिनाथपादाः ।

राजसत्त्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥[६]

अनुग्रहीकृतो ननु अनुग्रहीकृत एवेत्यर्थः ।

एतावता नन्वनुमेयशोभि काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥[७]

एतावता नन्वेतावतैवेत्यर्थः ।

---

१. माल० २।६।७
२. तत्रैव २।१०।११
३. तत्रैव ५।३।५
४. रघु० १।६०।
५. तत्रैव ८।३८
६. तत्रैव ११।९०
७. कुमार० १।३७

इति मालविकाग्निमित्रे हरदत्तोक्तौ नञ्द्वयेनातीव चमत्कारिकतया विध्यर्थो घटितः। द्वौ निषेधौ प्रकृतमर्थं गमयत इति वृद्धाः। विध्यर्थ एवाभिप्रेतश्चेत्तत्र च न साक्षादेवाभिहितः। सत्यम्। नन्वेतदेव खलु कवेर्निपातप्रयोगौचित्यम्। नञ्द्वयघटितविध्यर्थोऽवधारणार्थं निश्चयार्थञ्चाप्याह। विच्छित्युपचयञ्च कञ्चिदुपजनयति। नचतुष्टयेन चात्रानुप्रासोऽपि।

एवमन्यत्रापि यथा—

मासौ न काम्यो न च वेद सम्यग् द्रष्टुं न सा भिन्नरुचिर्हि लोकः।[1]

असौ काम्यो न इति न, काम्य एव; सा सम्यग् द्रष्टुं न वेद इति न, वेद एवेत्यन्वयः।

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्॥[2]

इयं शकुन्तला मनोगतमाधिहेतुं न वक्ष्यत्येवेत्यन्वयः।

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।[3]

त्वमलकां दृष्ट्वा न ज्ञास्यसे इति न ज्ञास्यस एवेत्यर्थः। इत्यादिषु प्रसङ्गेषु नञ्द्वयं विध्यर्थं घटयितुमेव प्रयुक्तम्।

**ननु**

प्रश्नानुधारणानुज्ञानुनयामन्त्रणे ननु।[4]

इत्यमरकोशलब्धेषु प्रायशः सर्वेष्वर्थेषु नन्विति निपातस्य प्रयोगो निभाल्यते।

तद्यथा—

प्रश्ने 'ननु'—

ननु भवानपि तत्रभवत्या उर्वश्या दर्शनपथं गतः।[5]

इति विदूषकस्य प्रश्नो ननुपदेन सूच्यते।

ननु स्वाङ्गसौष्ठवातिशयमुपपोद्दिष्टवती भगवती।[6]

---

१. रघु० ६।३०
२. शाकु० ३।६
३. मेघ० १।३७
४. अमर० ३।३।२४८
५. विक्रमो० २।२।३
६. माल० १।१५।१६

इति परिव्राजिकां प्रति राज्ञः प्रश्नो मालविकाग्निमित्रे ।

ननु गौतमवचनमप्यार्यो हृदये करोति ।[1]

इति देव्या धारिण्याः प्रश्नः ।

एवञ्च—

आर्य गणदास ! ननु दर्शितोपदेशा ते शिष्या ।[2]
ननु तत्रैव देवी तिष्ठति ।[3] इत्यादिषु ।

अवधारणे 'ननु'—

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥[4]

यस्यापदां त्वं प्रतिहर्ता तस्य मे सप्तस्वङ्गेषु शिवमुपपन्नं ननु उपपन्नमेवेत्यवधारणे ननुनिपातः ।

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥[5]

तैलनिषेकबिन्दुना सह दीपार्चिर्मेदिनीमुपैति ननु उपैत्येव । नन्वत्रावधारणे इति मल्लिनाथपादाः ।

राजसत्वमवधूय मातृकं पित्र्यमस्मि गमितः शमं यदा ।
नन्वनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृतः ॥[6]

अनुग्रहीकृतो ननु अनुग्रहीकृत एवेत्यर्थः ।

एतावता नन्वनुमेयशोभि काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥[7]

एतावता नन्वेतावतैवेत्यर्थः ।

---

१. माल० २।६।७
२. तत्रैव २।१०।११
३. तत्रैव ५।३।५
४. रघु० १।६०।
५. तत्रैव ७।३८
६. तत्रैव ११।९०
७. कुमार० १।३७

नन्वीदृशानि तपस्विन्या नामधेयानि ।[1]

इति शाकुन्तलगते सानुमतीवचने नन्वित्यवधारणार्थकपदम् ।

नन्वेतस्य व्रतपरिग्रहस्यायं प्रभावो यदेतावन्मन्त्रित आर्यपुत्रः ।[2]

अत्र नन्ववधारण एव ।

ननु कलहप्रियोऽसि ।[3]
विजयी भवत्वार्यः । ननु विजयार्थ्यमिन्यहमार्यस्य ।[4]
ननु मत्सम्पर्कमुपलभ्य ।[5]

इत्यादिषु ननुशब्दोऽवधारणसूचकः ।

अनुनये 'ननु'—

मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ।[6]

अजविलापान्तर्गतेऽस्मिन्पद्ये ननुपदेन सानुनयसम्बोधनं प्रसङ्गानुकूलमेव ।

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥[7]

इति रतिविलापे सानुनयनिवेदनं ननुपदेन सूच्यते ।

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।[8]

मेघदूतीयेऽस्मिन्पद्येऽपि ननिवति सानुनयसम्बोधने । तेन पद्यादावेवास्य प्रयोगो नितरामुपपन्नः ।

अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।[9]

१. शाकु० ६।७।८
२. विक्रमो० ३।१३।१४
३. माल० १।१५।१६
४. तत्रैव १।१६।२०
५. तत्रैव ४।१२
६. रघु० ८।३२
७. कुमार० ४।३२
८. मेघ० २।५२
९. शाकु० ३।१८।१९

ननुरत्र दुष्यन्तस्य सानुनयकथनसूचको निपातः ।

ननु वार्यतामेष धृष्टः ।[1]

इत्यत्रापि ननु इत्यनुनये विद्यते ।

भट्टिनि परिवर्तनविभावितारं भूर्जपत्रं खल्वेतत् । हन्त, भट्टिन्या एव नूपुरकोट्या लग्नम् । ननु वाच्यतामेतत् ।[2]

इति विक्रमोर्वशीये ननुपदं निपुणिकायाः सानुनयनिवेदनं सूचयति ।

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥[3]

इति मालविकाग्निमित्रे नृपस्योक्तौ अवधारणानुगतोऽनुनयो व्यज्यते ।

आक्षेपे 'ननु'—

नन्विति परमताक्षेपानुसंगप्रणापृष्टप्रतिवचनेषु इति दण्डनाथोक्त्या आक्षेपेऽपि ननुपदं प्रयुज्यते । कालिदासेनापि यथा—

प्रलपत्येष वैधेयः । ननु प्रभुरेव निदर्शनम् ।[4]

नन्विति विदूषकमताक्षेपे प्रयुज्यते सेनापतिना ।

ननु भवानग्रतो मे वर्तते ।[5]

इति विदूषककथने ननुपदमाक्षेपे वर्तते । भवन्तं रत्नस्वाम्यः कः सुन्दरो विद्यते इत्याक्षेपः ।

ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया ।[6]

सखि ! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि इति प्रियंवदामतमनुसूयपाक्षिप्तं नन्विति निपातमवलम्ब्य ।

नन्ववसरोपसर्पणीया राजानः ।[7]

---

१. शाकु० ६।१८।१६
२. विक्रमो० २।१८।१६
३. माल० ४।१०
४. शाकु० २।४।५
५. तत्रैव २।७।८
६. तत्रैव ४।०।१
७. शाकु० ६।१।२

इत्यत्रापि ननु इति परमताक्षेप एव ।

ननु प्रथमं मेघराजिर्दृश्यते पश्चाद्विद्युल्लता ।[१]

सख्या विना त्वं मां न नन्दयसीति नृपोक्तौ चित्रलेखायाः साक्षेपं प्रतिवचनं ननुपदेन सूच्यते ।

ननु दृश्यत एव सा ।[२]

वयस्य परं मुहूर्तादागमनं देव्याः । तद्विविक्ते कथयिष्यामि स्वामवस्थामि'ति पुरूरवसः कथनं 'नन्वि'ति विदूषकवाक्येनाक्षिप्यते ।

हेतौ 'ननु'—

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।[३]

ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकण्वस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् ।[४]

इत्यत्र नन्विति हेतौ ।

ननु समदुःखगतः पीयते लोचनाभ्याम् ।[५]

ननु समदुःखगतः समदुःखगतत्वादित्यर्थः ।

अधिकारे 'ननु'—

मा भैषीः । ननु मत्समीपे वर्तिष्यसे ।[६]

इति दुष्यन्तोक्तौ ननुपदे अधिकारभावो विद्यते ।

प्रतिवचने 'ननु'—

ननु प्रणयिजनः ।[७]

---

१. विक्रमो० २।१४।१५
२. तत्रैव ३।७।८
३. रघु० ५।६६
४. शाकु० ४।३।४
५. विक्रमो० १।१२।१३
६. शाकु० २।१६।१७
७. विक्रम० १।१२।१३

अयि कः इति चित्रलेखाप्रश्ने उर्वश्याः प्रतिवचनम् ।

नन्वयं मणितमेव म्लानकमलनालायमानैरङ्गैः ।[1]

किन्नु खलु साम्प्रतं भणिष्यति इति उर्वश्या वितर्के चित्रलेखायाः प्रतिवचनम् ।

सम्बोधने 'ननु'—

नन्वेतेऽमृतगर्भाः सेव्यन्तां चन्द्रपादाः ।[2]

इत्यत्र विदूषकस्य पुरूरवसं प्रति सम्बोधनम् ।

ननु भणामि तस्मिन्साधनीये कार्ये कुतो भवोपायोपक्षेपः ।[3]

इति मालविकाग्निमित्रे विदूषकस्य अग्निमित्रं प्रति सम्बोधनम् ।

सम्भ्रमे 'ननु'—

ननु प्रवेश्यताम् ।[4]

अस्माभिः प्रेषितमाश्रमप्रतिहारं ज्ञात्वा दुष्यन्तः सम्भ्रमेण दौवारिकमाज्ञापयति नन्वितिनिपातसाहाय्येन ।

वाक्यारम्भे 'ननु'—

नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् ।[5]

इत्यत्र शकुन्तलया नन्विति पदेन वाक्यमारभ्यते ।

एवमुपरिलिखितेन नन्वितिनिपातस्य कविकृतिषु बहुधा प्रयोगो लक्ष्यते ।

नाम

नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने ।[6] इत्यमरः ।

नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च ।

सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते ॥[7] इति मेदिनी ।

---

१. विक्रमो० २।१२।१३
२. तत्रैव ३।६।१०
३. माल० ३।२।३
४. शाकु० २२।१६।१७
५. तत्रैव ५।२१।२२
६. अमर० ३।३।२५१
७. मेदिनी० १८३।५२।५३

**प्राकाश्ये 'नाम'—**

नामेति निपातः प्राकाश्ये प्रसिद्धौ वा बाहुल्येन प्रयुक्त एव काव्येषु कालिदासकृतिष्वपि यथा—

> वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।[१]
> अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥[२]
> राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ।[3]

मनुर्नाम मनुरिति प्रसिद्धः, नन्दिनी नाम नन्दिनीति प्रसिद्धा, परन्तपो नाम परन्तप इति प्रसिद्ध इति सर्वत्र नामेति प्रसिद्धौ ।

के आर्यां परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम ।[४]

तपोवनानि राजरक्षितव्यानीति सर्वविदितमित्यर्थः ।

> दाक्षिण्यं नाम बिम्बोष्ठि ! बैम्बिकानां कुलव्रतम् ।
> तन्मे दीर्घाक्षि ! ये प्राणास्ते त्वदाशानिबन्धनाः ॥[५]

दाक्षिण्य बैम्बिकाना कुलव्रतमिति सर्वज्ञातं तथ्यमिति नामेति प्राकाश्ये प्रयुक्तः ।

प्राकाश्यार्थातिरिक्तमन्येष्वप्यर्थेषु प्रयुक्तं नामेतिपदं कवेर्वैदुष्यं पोषयति ।

**सम्भावनायां 'नाम'—**

> [illegible] खलु धीमतां कश्चिदविषयो नाम ।[६]

धीमतां कश्चिदविषयो नैव सम्भाव्यते इत्यर्थः ।

> अचेतनं नाम गुणं न लक्षयेन्मयैव कस्मादवधीरिता प्रिया ।[७]

---

१. रघु० १।११
२. तत्रैव १।८२
३. तत्रैव ६।२१
४. शाकु० १।२२।२३
५. माल० ४।१४
६. शाकु० ४।१७।१८
७. तत्रैव ६।१३

अचेतनं मन्ये गुणं न लक्षयेदित्यर्थे नामेति सम्भावनायामेव ।

किमिव नामायुष्मानमरेश्वरान्नार्हति ।[1]

अपिनिपातेन मुक्तस्तु नामेतिनिपातः सर्वत्र सम्भावनार्थमेव सूचयति यथा—

भवत्यनिष्टादपि नाम दुस्सहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।[2]

नामेत्यत्रापिना सह सम्भावनाद्योतकः । एवञ्च—

अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् ।[3]
यदेवमपि नाम विश्रमं लभेय ।[4]
अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते[5]
अपि नाम स राजर्षिरुद्धरेन्मो हृदयशल्यम् ।[6]
अपि नाम पुनरप्युपकारिणमेनं प्रेक्षिष्ये ।[7]
इदं तु चिन्तयामि अपि नामाहं पुरूरवा भवेयमिति ।[8]
अपि नामोर्वशी ।[9]
अपि नाम सा सुतनुरस्योपत्यकायामुपलभ्येत ।[10]
अपि नामैवं स्यात् ।[11]

इत्यादिषु सर्वत्र नामेति सम्भावनायां विद्यते ।

---

१. शाकु० ७।२।३
२. कुमार० ५।४२
३. शाकु० १।२०।२१
४. तत्रैव २।०।१
५. शाकु० ७।२०।२१
६. विक्रमो० १।५।६
७. तत्रैव १।१६।२०
८. तत्रैव ३।६।१०
९. तत्रैव ३।१४।१५
१०. तत्रैव ४।४७।४८
११. तत्रैव ५।१६२०

कुत्सायां 'नाम'—

> चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।
> अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥[1]

परोऽपि शत्रुरपि को नामानुमन्यते । न कोऽपीत्यर्थः । नामेति कुत्सायामिति मल्लिनाथपादाः ।

को नामोष्णोदकेन नवमल्लिकां सिञ्चति । इत्यत्रापि नामेति कुत्सायाम् ।

> प्रतनुषु विभवेषु ज्ञातयः सन्तु नाम
> त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥[2]

नामेत्यनेनात्र बन्धुजनस्य कुत्सा विहिता । राघवपादास्त्वत्र सम्भावनायां नामेति निपातं मन्यन्ते परं कुत्सनमेवात्र कवेरभीष्टं तच्चानुपदं त्वयि तु इत्यनेन सूच्यते ।

> संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।[3]

इत्यत्रापि नामेतिपदं दुष्यन्तेनात्मनः कुत्साया प्रयुक्तम् ।

एवञ्च—

मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् ।[4]

भवति ! युक्तं नाम मन्मथवति प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम् ।[5]

इत्यादिषु नामेति निपातः कुत्सार्थकः ।

क्रोधे 'नाम'—

> कथमिदं नाम भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।[6]

---

१. कुमार०५।६८
२. शाकु० ५।८
३. तत्रैव ६।२
४. माल० २।१०।११
५. तत्रैव ३।१७।१८
६. शाकु०५।१६।१७

इत्यस्मिन् शाङ्‌र्गरवकथने नामेतिनिपातः क्रोधे प्रयुक्तः ।

अभ्युपगमने 'नाम'—

अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ।[1]
सेवितं नामावृत्तेन ।[2]
एवं नाम घोषयितव्यम् ।[3]
अपराधी नामाहं प्रसीद रम्भोरु विरम संरम्भात् ।
सेव्यो जनश्च कुपितः कथन्नु दासो निरपराधः ॥[4]
भर्तुरनुकूलं नाम मयाचरितम् ।[5]

इति सर्वत्र नामेत्यभ्युपगमे प्रयुक्तम् ।

नु

नु पृच्छायां विकल्पे च[6] इत्यमरः ।
नु स्यात्प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः ।[7] इति विश्वः ।

'नु' इति लघुनिपातः कालिदासकृतिषु कियतीमभिव्यञ्जकतां द्योतयतीति अधोलिखितैरुदाहरणैरभिलक्ष्यते—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥[8]

---

१. शाकु० १।२४।२५
२. तत्रैव ६।१।२
३. तत्रैव ६।२३।२४
४. विक्रमो० २।२०
५. माल० ५।१६।२०
६. अमर० ३।३।२४८
७. विश्व० १८८।३१
८. विक्रमो० १।२०

इत्यस्मिन्पद्ये नुत्रयेण किमपि मनोहार्युत्प्रेक्षितं कविना तृतीयचरणे 'कथं नु' इति निपातद्वय चाक्षेपे वर्तते।

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं
किं कर्णिकारकुसुमैर्न कृत नु दग्धम्।[1]

इत्यत्र नु निश्चये। दग्धं कृतमेवेत्यर्थः।

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥[2]

अत्राधीरविप्रेक्षितस्यान्योन्योत्प्रेक्षणं 'नु' इति निपातेन मनोज्ञं खलु। अत्र मल्लिनाथपादाः—"अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित्।"

विकल्पार्थे 'नु'—

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः।[3]
क्व नु ते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधु।[4]
चित्रे निवेश्य परिकल्पितसत्त्वयोगा।
रूपोच्चयेन मनसा विधिना कृता नु।[5]

इत्यत्रापि नु विकल्पे। विधिना मनसा कृता नु मनसा कृता वेत्यर्थः।

वितर्के 'नु'—

स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत्फलमेव पुण्यम्।[6]

इत्यत्र नुचतुष्टयेन कीदृशी मनोहारी वितर्कप्रक्रियाभिव्यञ्जिता।

'कथ, किं, क्व'दीनां निपातानां साकं 'नु' निपातः कविना वितर्के वितर्कगर्भप्रश्ने वा बहुशः प्रयुक्तः। यथा—

अलमामरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम्।[7]

---

१. ऋतु० ६।२७
२. कुमार०१।४६
३. तत्रैव ४।६
४. तत्रैव ४।२४
५. शाकु० २।६
६. तत्रैव ६।१०
७. रघु० ८।६२

मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे [1]
अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः । [2]
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ [3]
शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ [4]
कथं नु तं बन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि । [5]
स्निग्धो जनश्च कुपितः कथं नु दासो निरपराधः । [6]
अविनोददीर्घयामा कथं नु रात्रिर्गमयितव्या । [7]
गौतम ! कथं नु ते सखी मां प्रतिपालयति । [8]
कथं नु खल्वस्मात्सङ्कटादात्मानं मोचयिष्यामि । [9]

इत्यादिषु सर्वत्र 'कथं नु' इति वितर्के युक्तः ।

एवञ्च—

किं नु खल्विमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता । [10]

किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः सन्देष्टव्यम् । [11]

भोः किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाऽग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता । [12]

---

१. रघु० ८।६८
२. कुमार० ५।६६
३. शाकु० ४६
४. तत्रैव ४।२१
५. तत्रैव ६।१३
६. विक्रमो० २।२०
७. तत्रैव ३।४
८. माल० ४।६।७
९. तत्रैव ४।१७।८
१०. शाकु० १।१३।१४
११. तत्रैव `।१५।१६
१२. तत्रैव ६।१८।१९

इत्येषु प्रसङ्गेषु 'किं नु' इति वितर्के युज्यते ।

एवमन्यत्रापि यथा—

अये किं नु खलु मद्विज्ञापनानन्तरमार्तानां कुररीणामिवाकाशे शब्दः श्रूयते ।[1]

हञ्जे निपुणिके ! किन्नु खल्वेतज्जीर्णचीवरमिवेतोमुखं दक्षिणमारुतेनानीयते ।[2]

किं नु खलु निरभ्रे विद्युत्संपातः ।[3]
किं नु खलु साम्प्रतं भर्ता भणति ।[4]

इति सर्वत्र 'किं नु' इति वितर्के विद्यते ।

क्व नु इत्यपि तथा —

'क्व नु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि ।[5]

सखि ! क्व नु खलु स आपन्नानुकम्पी भवेत् ।[6]
रक्ताशोक ! कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनम् ।[7]

इत्येषु प्रसङ्गेषु च 'क्व नु' इति वितर्कप्रश्ने समीचीनतया प्रयुक्तः ।

वा

वा स्याद् विकल्पोपमयोर्वितर्के पादपूरणे ।
समुच्चये च विस्रम्भे नानार्थातीतयोरपि ॥[8]

इति कोशस्थेष्वर्थेषु कविना वेतिनिपातस्य यथास्थानं प्रयोगो व्यधायि ।

---

१. विक्रमो० १।२:३
२. तत्रैव २।१८।१६
३. तत्रैव ४।१८।१६
४. माल० ५।११।१२
५. शाकु० ३।४।५
६. विक्रमो० २।६।१०
७. तत्रैव ४।६२
८. मेदिनी १८०।७४

विकल्पे 'वा'—

अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि सम्भावयितुं वनान्माम् ॥[1]
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥[2]
अरावणमरामं वा जगदद्येति निश्चितः ॥[3]
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥[4]
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥[5]

कीदृक्सौन्दर्यमत्र वान्वयेनाहितम् ।

प्रणयिषु वा दाक्षिण्यादथवा सद्वस्तुपुरुषबहुमानात् ।
शृणुत जना अवधानात्क्रियामिमां कालिदासस्य ॥[6]

इत्यत्रापि 'वा' इति विकल्पे प्रयुक्तः ।

उपमायां 'वा'—

व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥[7]

व्योम वा व्योमेव । वाशब्द इवार्थे । यथाह दण्डी—इववद् वायथाशब्दौ इति । इति मल्लिनाथपादाः ।

जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम् ।[8]

इत्यत्र पद्मिनी वा पद्मिनीमिवेत्यर्थः ।

स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥[9]

---

१. रघु० ५। ११
२. तत्रैव १०।३२
३. तत्रैव १२।८३
४. कुमार० ४।५
५. तत्रैव ५।७८
६. विक्रमो० १।२
७. रघु० १९।५१
८. मेघ० २।२३
९. माल० ५।१२

पत्रोर्णं वा पत्रोर्णमिवेत्यर्थः ।

समुच्चये 'वा'—

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥[१]

श्यामिकापि वा श्यामिकापि चेत्यर्थः ।

राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥[२]
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥[३]
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥[४]

इति सर्वत्र 'वा' इति निपातः समुच्चये विद्यते ।

सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥[५]

अत्र वाशब्दो द्वन्द्वार्थे न त्वन्यार्थे इति मल्लिनाथपादाः ।

न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥[६]

न वा न च इत्यर्थः ।

स्फुलिङ्गो वा नाग्नेर्गहनमभिवृष्टं यत इदम् ।[७]

स्फुलिङ्गो वा न स्फुलिङ्गोऽपि नेत्यर्थः । अपि च—

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।[८]

अत्र वाद्वयेनोपायान्तरमुभयोश्च समानोपयुक्तत्वं सूचितम् ।

के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ।[९]

---

१. रघु० १।१०
२. तत्रैव २।५३
३. तत्रैव ८।४६
४. तत्रैव १३।५
५. कुमार० २।६०
६. शाकु० ६।१८
७. विक्रमो० ४।६३
८. माल० ४।४
९. मेघ० १।५८

इत्यस्मिन् प्रसङ्गे च वेति निपातः खल्वर्थान्तरन्यासद्योतने स्वचमत्कृतिं प्रकटयति ।

एवमत्र कालिदासप्रयुक्तानां केषाञ्चन निपातानामौचित्यदृष्ट्या विवेचनं विहितम् । एतदतिरिक्तं भूयांसोऽन्येऽपि निपाता महाकवेः काव्येषु यथोचितं यथास्थानं निवेशिता विद्यन्ते, विशेषतश्च नाटकीयसंवादेषु । हर्षविस्मय-विषादादिसूचका विविधभावानुरूपं प्रयुक्ता निपाता यथा—दिष्ट्या - हन्त - भङ्ग - अहो - अविहा - अये - अयि - अहह - आः - हला - अम्मो - भोः - धिक् - हा प्रभृतयः । सर्वत्र च ते सुविमृश्योपन्यस्ताः । कविवरेणानेन प्रयुक्तानां निपातानामुपर्युक्तविवेचनेनेदं स्पष्टमापतति यदेते निपाता न केवलं वाच्यार्थ-मेव अभिदधति अपितु काव्यसन्दर्भे किमपि विशिष्टमर्थं व्यञ्जयन्ति । इत्थं ते रसचर्वणायां निमित्तानि भवन्ति । यत्र च कोऽपि विशिष्टो ध्वनिर्नास्ति तत्रैते प्रसङ्गानुकूलं सर्वथा समुचितारसार्थका एव ।

अपि च कालिदासीयनिपातप्रयोगेऽयं वैविध्यं दृश्यते । क्वचित्वसौ कोशेष्वप्रतिपादितेष्वप्यर्थेषु निपातानामनेकार्थत्वनियममनुपालयन् प्रसङ्गानु-रूपं स्वैरं निपातान् प्रयुङ्क्ते । न ह्यत्र विषये दोषसम्भावना शङ्क्या । दोष इति कालिदासे न घटते । यं स्वयं वाग्देवी वश्येवानुवर्तते तस्य को नु निर-ङ्कुशत्वमुद्भावयेत् ।

# चतुर्थः परिच्छेदः

## कालिदासस्य लिङ्गवचनसमासप्रयोगौचित्यम्

### (क) लिङ्गप्रयोगौचित्यम्

महाकविः शब्दानां यथास्थानप्रयोगे लिङ्गविधानेऽपि सुतरां निपुणः। एकत्र शब्दस्य पुंल्लिङ्गरूपमस्याभीष्टमन्यत्र च स्त्रीलिङ्गरूपम्। उपमानोपमेययोर्लिङ्गसाम्य रवस्य कवेरनुपम चातुर्यम्। अन्येऽपि कविवरा उपमानोपमेययोर्लिङ्गसाम्ये सतर्का नो चेल्लिङ्गभेदो नामोपमादोषः प्रसज्येत। उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेद[1] इति वामनेनापि यथोक्तमुपमादोषप्रसङ्गे। परमिदं लिङ्गसाम्यं यथास्माकं कवेरस्ति स्वाभाविकं सुरुचिपूर्णं सुललितं च न तथान्यस्य कस्यापि कवेरिति तस्योपमासौष्ठवेन सम्यक् सम्पाद्यते। तथाहि—

> दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्।
> श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम्॥[2]

इत्यत्र लिङ्गसाम्ये यत्सौन्दर्यं विद्यते तदस्य कवेः शब्दज्ञान शब्दपरिपाकं वा सूचयति। उपमा कालिदासस्येति भणितिर्लोकविख्याता। तेन लिङ्गसाम्यस्योदाहरणान्यपि कवेरसंख्यातानि। तेषु कानिचिदुल्लेखार्हाण्येव यानि काव्यरसिकानां मनांसि प्रसभं हरन्ति। यथा हि—

> वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
> जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥[3]

इत्यस्मिन्नाद्ये रघुवंशीये श्लोके पार्वतीपरमेश्वरयोरुपमानीभूतौ वागर्थौ नितान्तमुपयुक्तौ। वागिति पद शब्दपदस्य पर्यायत्वेन कोशकारैः स्वीकृतम् यथा—

> वाग्वाण्यौ गौणवृत्त्या सा शब्दे वक्त्रेऽपि च स्त्रियाम्[4] इति।

---

१. काव्यलङ्कारसूत्रवृत्तिः ४।२।१२
२. शाकु० ७।२९
३. रघु० १।१
४. वाङ्मयार्णवः ५२५५

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये इत्यस्य स्थाने शब्दार्थाविव सम्पृक्तौ शब्दार्थप्रतिपत्तये इति पाठमपि प्रयोक्तुमलमासीत्कविः। पश्चाद्वर्तिभिः कविभिरालोचकैर्वा 'शब्दार्थौ' इत्येव प्रायेण प्रयुक्तम्।

"सिद्धे शब्दार्थसम्बन्धे"[1] इति भाष्यकारवचनात् शब्दार्थयोर्नित्यसम्बन्धादस्मिन्प्रसङ्गे पार्वतीपरमेश्वरयोर्नित्यसम्पृक्ततां प्रतिपादयितुं 'शब्दार्थौ' इति प्रयोग उपयुक्ततरः स्यात् छन्दोऽपि न दुष्येत किन्त्वस्माकं कवेस्तु 'वागर्थौ' इति प्रयोग एवाभीप्सित आसील्लिङ्गसाम्यकारणात्। 'वकारस्यामृतबीजत्वाद्-प्रचयगमादिसिद्धि' रिति प्रयोजनान्तरं मल्लिनाथपादा निर्दिशन्ति। आचार्यवर्या डा० हजारीप्रसादद्विवेदिमहाभागास्तु वाक्पदप्रयोगे कालिदासस्य काव्यप्यलोकसामान्यवर्तिनी प्रतिभां प्रदर्शयन्ति। तेषां मते यत्तत्त्वं कञ्चिदर्थं प्रकटयेत् तद् वाग् वा वचनं वा कथनीयम्। मालविका भावमनोहरं नृत्यमकरोत् तस्या अङ्गसञ्चालनेन गीतस्य कश्चिदर्थः जातः कालिदासानुसारमिमान्यङ्गान्यन्तर्निहितवचनानि सन्ति, यानि न शब्दायन्ते सर्वमर्थं सूचयन्ति।[2] अभिव्यक्तेर्यदस्ति माध्यमं तद् वचनं वा वाग् वा। वाचा च यत् प्रकाश्यं तदस्त्यर्थः। लोके यत्किमपि दृष्टिगतं तदभिव्यञ्जयति किञ्चित्। सर्वोऽयं संसार एवात्र देवरचितं काव्यम् ऋषिर्यथावोचत्—'पश्य देवस्य काव्यं न विभेति न ऋष्यति'। अस्तु वाक्पदस्य प्रयोगोऽत्र विस्तृतेऽर्थे कृतः। नृत्यं नाट्यं चित्रं वस्तु किञ्चेदं विश्वं विश्वमेव वाक्। मनसैव चाभिव्यक्तमर्थं यथाशक्ति वयं गृह्णीमः विश्वमिदं वागर्थयोः सम्पृक्ततायाः लीला। पार्वती च शिवस्य लीलासखी। इयं लोकरचना तस्याः क्रीडा, चिन्मयः शिवस्तस्याः सखा, सदानन्दश्च तस्या आहारः वागर्थयोराश्रयभूमिः सज्जनहृदयमेव तस्या वासः। तथा हि ललितासहस्रे—

> क्रीडा ते लोकरचना सखा ते चिन्मयः शिवः।
> आहारस्ते सदानन्दो वासस्ते हृदयं सताम्॥ इति।[3]

एवं पार्वतीपरमेश्वरयोरुपमानत्वेन वागर्थयोः प्रयोगः कवेः शब्दपरिपाकपरिचायकः। लिङ्गसाम्यञ्चात्र सविशेषमवलोकनीयम्।

इदमेव च लिङ्गवैशिष्ट्यं कवेरन्यकृतीनां प्रारम्भिकपद्येष्वपि दृग्गोचरीभवति। तथा हि—

---

१. महाभाष्यम् १।१।१
२. माल० १।८ अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
३. कालिदास की लालित्ययोजना, पृ० ६०-६१

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।[1]

इत्यत्र नगाधिराजस्य हिमालयस्योत्तरस्यां दिश्यवस्थानं दम्पत्योः सम्मेलनं ध्वनयति अतो दिशि इति स्त्रीलिङ्गपदस्यौचित्यम् ।

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥[2]

इत्यस्मिन्मेघदूतस्य प्रारम्भिके पद्ये 'यक्षः वसतिं चक्रे' इति वचसा प्रकृति-पुरुषयोः सम्बन्ध एव कवेरभीष्ट इति द्योत्यते । एवञ्च—

प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥[3]

इति शाकुन्तलीये नान्दीपाठे ईशस्याष्टाभिस्तनुभिः प्रपन्नत्वेन तनुभिरिति स्त्रीलिङ्गपदप्रयोगेण प्रकृतिपुरुषयोः सम्पृक्तत्वं प्रकटीभवति । मालविकाग्नि-मित्रेऽपि तथा—

अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥[4]

इत्यत्र स एव भावः कवेर्विद्यते ।

अपि च—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी ।[5]

इति विक्रमोर्वशीये नान्दीपद्ये पुरुषस्य सम्बन्धे रोदसीति स्त्रीलिङ्गपद-प्रयोगेण कविना प्रकृतिपुरुषसम्बन्ध एवावस्थापितः ।

उपमानोपमेययोर्लिङ्गसाम्यस्यान्युदाहरणानि यथा—

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥[6]

---

१. कुमार० १।१
२. मेघ० १।१
३. शाकु० १।१
४. माल० १।१
५. विक्रमो० १।१
६. रघु० १।५६

स्वाहया हविर्भुजम् अरुन्धत्या तपोनिधिं वशिष्ठम् इत्यत्र उपमानोपमेयातिरिक्तं लिङ्गसाम्यमपि दर्शनीयम्। एवमेव—

प्रभा पतङ्गस्य मुनेश्च धेनुः।[1]

इत्यत्राप्यवधेयं लिङ्गसाम्यम्।

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः॥[2]

इत्यत्र वायुना घनव्यपायेन कटप्रभेदेन रघुणा विभावसुर्गभस्तिमान् करीव दिलीप इति सर्वत्र पुल्लिङ्गपदानामवस्थितिरवलोकनीया।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः॥[3]

अत्र गुरुणा सवित्रा हुताशनो राजा तेजो राज्यमिति उपमानोपमेययोर्लिङ्गसाम्यमुपपन्नम्।

यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः॥[4]

लोकेन उष्णरश्मेः चैतन्यमिव त्वया गुरोः ज्ञानमिति सर्वत्र लिङ्गसाम्यम्। चैतन्यमिति प्रयुक्तं न तु प्रकाशः ज्ञानमित्यस्य लिङ्गसाम्यात्।

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥[5]

दीपशिखेवात्रेन्दुमती नरेन्द्रमार्गाट्ट इव भूमिपालः इत्युभयत्र लिङ्गसाम्यं प्रशंसनीयम्।

सोऽभवद् वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः॥[6]

प्रत्ययप्रकृतियोग इव वरवधूसमागमोऽभवदित्यत्र लिङ्गसाम्यमत्यन्तमुपपन्नम्।

---

१. रघु० २।१५
२. तत्रैव ३।३७
३. तत्रैव ४।१
४. तत्रैव ५।४
५. तत्रैव ६।६७
६. तत्रैव ११।५६

> व्योम पश्चिमकलास्थितेन्दु वा पङ्कशेषमिव घर्मपल्वलम् ।
> राज्ञि तत्कुलमभूत्क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥[१]

इत्यत्र कुलमित्यस्योपमानीभूतानि पदान्यपि नपुंसकलिङ्गस्यैव नियोजितानीति कवेः शब्दचयनचातुर्यमेव सूच्यते ।

> तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
> विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥[२]

रत्नशलाकया विदूरभूमिरिव दुहित्रा सवित्री चकासे इत्यत्रापि लिङ्गसाम्यमवेक्षणीयम् ।

> एष चारुमुखि योगतारया युज्यते तरलबिम्बया शशी ।
> साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वरः ॥[३]

कन्यया वर इव शशी योगतारया युज्यते इत्युभयत्र लिङ्गसाम्यम् । शाकुन्तले यथा—

> अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
> रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
> अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
> न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥[४]

इत्यस्मिन्पद्ये रूपमित्यस्य पुष्पं किसलयं रत्नं मधु, फलमित्येतान्युपमानानि सुविमृश्य नपुंसकलिङ्गेन प्रयुक्तानि ।

> तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
> ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥[५]

मदनः न तथा त्वां यथा माम्, दिवसः न तथा कुमुद्वतीं यथा शशाङ्कमिति सर्वत्र लिङ्गसाम्यं विद्यते ।

---

१. रघु० १९।५१
२. कुमार० १।२४
३. तत्रैव ८।७३
४. शाकु० २।१०
५. तत्रैव ३।१२

श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥[1]

इत्यत्रगतं लिङ्गसाम्यं तु प्राग्वर्णितम् । विक्रमोर्वशीये च—

प्राविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गारोधःपतनकलुषा गच्छतीव प्रकाशम् ॥[2]

इयमुर्वशी रात्रिः अर्चिः गङ्गा इव लक्ष्यते । अत्रोर्वश्या उपमानतां गताः सर्वे स्त्रीलिङ्गशब्दाः सौन्दर्यमावहन्ति ।

एषा मनो मे प्रसभं शरीरात् पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात् सूत्रं मृणालादिव राजहंसी ॥[3]

यथा राजहंसी मृणालात्सूत्रं तथा सा शरीरात् मे मनः कर्षति इति लिङ्गानुसारमुपमानोपमेयपदानां चयनमत्रापि द्रष्टव्यम् ।

मालविकाग्निमित्रेऽपि तावद्—

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसम्पर्का धारिणी रजनीव मो ॥[4]

लिङ्गसाम्यमस्मिन्श्लोकेऽपि रम्यम् ।

उपमानोपमेयलिङ्गसाम्यादतिरिक्तमप्यस्य कवेर्लिङ्गानुकूलपदविन्यासः सुतरां संलक्षणीयः । यथा रघुवंशे—

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥[5]

इत्यत्र यथा ज्ञानेति पदं नपुंसकलिङ्गवाच्यस्ति मौनपदमपि तथा । यथा क्षमाशब्दः स्त्रीलिङ्गे तथा शक्तिशब्दोऽपि स्त्रीलिङ्गे । एवमेव त्यागपदं

---

१. शाकु० ७।२९
२. विक्रमो० १।६
३. तत्रैव १।२०
४. माल० ५।६
५. रघु० १।२२

पुंल्लिङ्गं, श्लाघाविपर्यय इत्यपि पुंल्लिङ्गं । एकस्मिन्नेव वाक्ये त्रयाणां लिङ्गानां युगपद्विन्यासः कवेः शब्दविन्यासकौशलं प्रतिपादयति ।

> अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ ।
> अपरान्तमहीपालव्याजेन रघवे करम् ॥[1]

इत्यत्र 'ददावि'ति क्रियायाः कर्मत्वेन 'करम्' अवकाशम्' चेत्युभावेव पुंल्लिङ्गवाचिनौ शब्दावत्यन्तमुपयुज्येते । न ह्यत्र 'स्थानमि'ति पदं प्रयुक्तं पुंल्लिङ्गवाचिना करशब्देनासंयोगात् ।

> तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
> क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
> हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
> निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यापि ॥[2]

इत्यस्मिन् शाकुन्तलीये पद्ये प्रथमे पादे शय्या इति स्त्रीलिङ्गपदं, द्वितीये मन्मथलेख इति पुंलिङ्गपदं, तृतीये च बिसाभरणम् इति नपुंसकलिङ्गपदं विधाय कविना लिङ्गत्रयस्य युगपन्निसर्गसुन्दरः प्रयोगोऽदर्शि ।

एवमेव—

> अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
> स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।[3]

इत्यत्र 'संयमधनान्' 'कुलम्' 'स्नेहप्रवृत्तिम्' इति लिङ्गत्रयस्य कर्मत्वेनैकस्मिन्नेव वाक्ये प्रयोगः कवेर्लिङ्गविधानचातुर्यं पुष्णातितराम् ।

### (ख) वचनप्रयोगौचित्यम्

लिङ्गविशेषस्य यथा क्वचित्कवेराग्रहो दृश्यते तथैव केषुचित् स्थलेषु वचनविशेषस्याग्रहेणापि कविसम्राजः शब्दपरिपाकं पोपयतितराम् । साभिप्रायमिव कुत्रचित् स बहुवचनं प्रयुङ्क्तेऽन्यत्र च द्विवचनमेकवचनमपि वा ।

---

१. रघु० ४।५८
२. शाकु० ३।२३
३. तत्रैव ४।१७

बहुवचनप्रयोगः —

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥[1]

इत्यस्मिन् मेघदूतीये प्रथमे पद्ये 'रामगिर्याश्रमेषु' इति बहुवचनप्रयोगेण यक्षस्य प्रियाविरहे इतस्ततो भ्रमणं सूच्यते । विरहसन्तापवशादेकत्रास्थातुमशक्यत्वादाश्रमादाश्रमं पर्यटन्नेव कालं कथञ्चिद् यापयति स्म। तथा हि—अनवस्थितचित्तस्य न जने न वने रतिः इत्युक्त्या न तस्य मनो विरहवेदनया क्वचिदेकस्मिन् स्थले विषये वा रमते। अतः खलु सः प्रियाया अङ्गानि श्यामालतासु, दृष्टिपातं चकितहरिणीप्रेक्षणे, वक्त्रच्छायां शशिनि, केशान् शिखिनां बर्हभारेषु, भ्रूविलासान् नदीवीचिषूत्प्रेक्षमाण इतस्ततो भ्राम्यति । साध्वत्र कविना बहुवचनप्रयोगो विहितः ।

गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम्[2]

यक्षेश्वराणामिति गौरवे बहुवचनं युज्यते । कुबेरस्य प्रभूतप्रभाववत्त्वात् । कुबेरो हि यक्षाधिपतिर्यक्षस्य तदर्थं बहुवचनप्रयोगः आदरार्थं वा कृतः स्वामिसेवकसम्बन्धात् ।

गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥[3]

अत्र बलाकाः इति बहुवचने बहुस्त्रीसहायता मेघस्य द्योत्यते । बहुस्त्रीयुक्तता च तस्य नयनसुभगस्य सौभाग्यातिशयत्वमेव सूचयति । अयमेव चाशयो रघुवंशेऽपि—

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धुः ॥[4]

इत्यत्र मुखार्पणेषु इति बहुवचनप्रयोगो विद्यते । सागरस्य बहुवल्लभा नदीरूपाः सन्ति, ताभिश्च प्रतिस्पर्धयेव बहुविधमुखार्पणं क्रियते । तरङ्गाधरदानदक्ष-

---

१. मेघ० १।१
२. तत्रैव १।७
३. तत्रैव १।६
४. तत्रैव १३।६

स्यानन्यसामान्यवृत्तेः सागरस्य चैवं मुखार्पणेष्विति बहुवचनप्रयोगेण सुभगत्व सूच्यते । एवञ्च—

पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ।[1]

अत्र नेत्रकौतूहलानामिति बहुवचन साभिप्रायम् । विविधा नार्यस्तत्र सन्ति । काश्चित् प्रोषितभर्तृका. काश्चिन्मानिन्य, काश्चिदनुरक्ताश्च । तासा तत्र यथासम्भव दृष्टिपाताः । अत एव बहुवचनप्रयोगः ।

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः ।[2]

इत्यत्र मन्दारपुष्पैरिति बहुवचनप्रयोगेण प्रसाधनसामग्र्या बाहुल्यं मादक-सुगन्धातिशयत्व च द्योत्यते यतो हि भूमिपतितानां मन्दारपुष्पाणामेव बाहुल्य विद्यते केशपाशनिवेशितानां तु गणनैव का । अपि चानेनाभिसारिकाणां गति-वेगत्वं त्वरातिशयत्वं वा ध्वन्यते ।

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः[3]

पेशलैरिन्द्रनीलैरिति बहुवचनमत्र शिखराणा बाहुल्यं रचनावैविध्यं च ध्वनयितु प्रयुक्तम् । यथाहुः पूर्णसरस्वतीपादाः "बहुवचनेन च शिखरबाहुल्यं निर्माणवैविध्यं च प्रतीयते" इति । अथवेन्द्रनीलमणीनां नैकत्वं वैविध्य वा बहुवचनेन ध्वन्यते । नैकनैकविधैर्वा इन्द्रनीलमणिभी रचितशिखर इति कदा-चित्तात्पर्यं स्यात्कवेः ।

तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥[4]

तालैरिति बहुवचनप्रयोगोऽत्रानेकविधचातुर्यं परिणामतः तल्लीनतां मनोविनोदे च व्यस्ततया दुःखापनोदनप्रयत्न चाभिव्यञ्जयति । तालदानस्य पौनःपुन्यं वा ध्वनितं स्यात् । आचार्या अभिनवगुप्तपादा अप्येवमाहु-र्लोचने—

---

१. मेघ० १।५०
२. तत्रैव २।११
३. तत्रैव २।१७
४. तत्रैव २।१९

तालैरिति बहुवचनमनेकविधं वैदग्ध्यं ध्वनयन् विप्रलम्भोद्दीपकतामेती'ति ।[1]

प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥[2]

विरहेष्विति बहुवचनमत्र चिरविरहसूचकमन्यथा रमणविरहे इत्येकवचनान्तेनापि कार्यं सिध्यत्येव किन्तु रमणविरहेष्विति कथनेन विरहावस्थाया दैर्घ्यमसह्यत्वं च प्रकटीभवति । रमणैर्यदा यदा विरहो भवति तदैत एवाङ्गनानां विनोदा इत्येवमर्थापिते विरहावृत्ति वा बहुवचनमत्र ध्वनयेत् । अन्यत्रापि तथा—

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥[3]

इत्यत्र व्यथाभिरिति बहुवचनेन विरहपीडाधिक्यं सूचितम् । वियोगे व्यथा बहुगुणिता सती अधिकाधिकं पीडयति । तेनैवात्र यक्षस्य दुर्लभप्रार्थनेयं यद् दीर्घयामा त्रियामा क्षण इव संक्षिप्येत सर्वावस्थास्वहरपि मन्दमन्दातपं स्यादिति ।

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं[4]

अलकैरिति बहुवचनप्रयोगोऽत्र निरोधातिशयत्वं द्योतयति । अन्यत्र तु शुद्धस्नानात्परुषमलकम्[5] इत्येकवचनं प्रयुङ्क्ते कविरयम् । अत्र प्रयुक्तमेकवचनमपि यथा साभिप्रायं तच्चैकवचनप्रसङ्गे वर्णयिष्यते ।

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि सति स्वप्नसन्दर्शनेषु ।[6]

स्वप्नसन्दर्शनस्याशुविनाशित्वात्कविनात्र स्वप्नसन्दर्शनेष्विति बहुवचन-

---

१. लोचन (चौखम्बा) पृ० ३५४
२. मेघ० २।२७
३. तत्रैव २।४८
४. तत्रैव २।३५
५. तत्रैव २।३३
६. तत्रैव १।४६

प्रयोगः साभिप्राय विहितः स्वप्नसन्दर्शनेष्वपि प्रिया कथमपि लभ्यते। स्वप्नसन्दर्शने तु प्रश्न एव न विद्यते । बहुवचनेन विषयान्तरचिन्ताभावान्मनसः सातत्यवासितायाः स्वप्नोन्मेषप्रमोषयोस्तडित इव तस्याः क्षणे क्षणे दृष्टत्वं नष्टत्वं च ततश्च स्वस्य वार वार व्याकुलत्वम्, तेन च द्रष्टृणामतिकरुणार्द्रताजनकत्वं च द्योत्यते इति पूर्णसरस्वतीपादाः ।

अपि च प्रियाविरहव्याकुलत्वाद् वार वार निद्राभङ्गरत्वाच्च यक्षस्य न कोऽपि स्वप्नश्चिरायाभूत् । यदैव स निद्रा लेभे स्वप्ने प्रियाया गाढालिङ्गनाय स्वभुज प्रसारयन्नेवानन्दमाप्नोत् । पुनः पुनस्तादृशः स्वप्नः स्यादिति स्वप्नसन्दर्शनेष्विति बहुवचनप्रयोगौचित्यम् ।

आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥

अत्र बहुवचने विशेषः । उत्तरदिश आगतानां सर्वेषामेव वातानामालिङ्गनं करोमि न जाने को वातस्त्वदङ्गस्पर्शसुखलब्धः स्यात् । अत एवात्र सम्भावनायां 'किले' ति निपातस्य प्रयोगो विहित. ।

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगाद्[2]

इत्यत्र 'स्नेहानि'ति बहुवचनप्रयोगो यक्षस्य प्रियां प्रति स्नेहातिशयत्वज्ञापनार्थं कृतः ।

उपात्तविद्यं विधिवद् गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥[3]

गुरुभ्य इति बहुवचनप्रयोगो नानाविद्यावाप्तिमत्त्वमजस्य सूचयति । नैकेन गुरुणा सोऽध्यापितः अपि तु तत्तद्विद्याविचक्षणेभ्यो गुरुभ्य. स उपात्तविद्यो जात इति तस्य विविधविद्यावैचक्षण्य बहुवचनप्रयोगेणात्र लक्ष्यते ।

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥[4]

---

१. मेघ० २।५०
२. तत्रैव ६।४६ २।५५
३. रघु० ५।३८
४. कुमार० ५।७६

प्रथमं मङ्गलं निषेव्यते इत्येकवचने मङ्गलमिति कथयित्वा पुनः किमेभिर्मङ्गलैरिति बहुवचनप्रयोगे पूर्वापरविरोधः प्रतीयेत, पर विरोधः कालिदासे न घटते। मल्लिनाथपादैरप्यस्य निराकरणं सम्यक्कृतम्—"पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते। इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः तदुभयासंस्पृष्टस्य तु यथाकथञ्चिदास्ताम्। को दोष इत्यर्थः।" इति।

**द्विवचनप्रयोगः —**

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम्।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥[1]

अत्र 'दोर्भ्यामि'ति द्विवचनपदं साभिप्रायं कविना प्रयुक्तम्। आद्यपुंसोऽनुप्रवेशात् पयश्चरुस्तथा दुर्वहो जातो यत्तद् हेमपात्रं यस्मिन् पयश्चरुरासीदेकेन दोष्णा वोढुमशक्यमभूद् दोर्भ्यामाहितम्। 'दोर्भ्यामि'ति द्विवचनेनातिगुरुत्वं सूच्यते' इति चारित्रवर्धनपादा अपि।

एवञ्च—

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।[2]

इत्यत्रापि दोर्भ्यामिति द्विवचनप्रयोगो नितान्तमौचित्यमावहति। अनेन पार्वत्याः सौकुमार्यातिशयत्वं पितुस्तां प्रत्यनुकम्पातिशयत्वञ्च द्योत्यते। आयान्तं कञ्चिदुपद्रवं दृष्ट्वा भीता काचिद् वानरी यथा स्वशिशुं वक्षसि विधाय वृक्षाद् वृक्षमुत्प्लवते तथैव रुद्रसंरम्भभीत्या दुहितरं दोर्भ्यामादाय हिमवान् द्रुतपदं तस्मात् स्थानादधावत्। एवं 'दोर्भ्यामि'ति द्विवचनपदमत्रातीव व्यञ्जकम्।

**एकवचनप्रयोगः —**

मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥[3]

इत्यस्मिन्मेघदूतीये पद्ये स्तनशब्दस्यैकवचने प्रयोगो युक्तियुक्तो विद्यते स्तनौ द्वौ स्तः, द्वावेव वर्णनीयौ कथं स्तन इत्युक्तम्। युक्तम्, विदग्धा नायिका

---

१. रघु० १०।५१
२. कुमार० ३।७६
३. मेघ० १।१८

स्तनमेकमेव दर्शयन्त्यन्यथा धाष्ट्र्यप्रसङ्गात् । तथा च—

आवृणोति प्रयत्नेन विदग्धैकस्तनं सदा
विवृणोति तथा चैकं यूनां चित्तापकर्षणे ॥

इति भरतमल्लिकपादाः स्वकीयायां मेघदूतटीकायामुदाहरन्ति ।[1] एवमत्र स्तन इत्येकवचने विशेषः ।

शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम् ।[2]

'अलकमि'त्येकवचनमत्र विरहिण्याः कैशविन्यासराहित्ये शुद्धस्नानाज्जटिलत्वं सूचयितुं साभिप्रायं प्रयुक्तम् । तैलादेः प्रयोगाभावे साम्प्रतमलका नालका अपि तु परुषत्वाद् ग्रथितत्वाच्च अलक एव भूत इत्याशयः ।

त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या[3]

इत्यत्र नयनमित्येकवचनं साभिप्रायं प्रयुक्तं कविना । स्त्रीत्वादित्यादेक-नयनस्य तदपि वामस्यैव स्पन्दनं शुभाशंसि । सव्यनेत्र स्फुरत्स्त्रीणां शंसति प्रियसङ्गम् इत्युक्त्यात्र सव्यनेत्रमिति योजनीयं तच्च 'वामश्चास्याः कररुह-पदैर्मुच्यमानो मदीयैरि'त्यत्र चकारात् सिध्यति ।

– पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
· सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥[5]

चरणौ रञ्जयित्वा अनेन (चरणेन) स्पृशेति यदेकवचनमत्राधारितं कविना ततस्य विदग्धमतित्वमेव निर्दिशति । मल्लिनाथपादा अप्यस्मिन्प्रसङ्गे एवमाहुः —

रञ्जने द्वयोरपि नियमाच्चरणावित्युक्त्वाप्योचित्यात्ताडनविधावेकत्वपरा-मर्श इत्याहुः ।

---

१. मेघ० १।१८ (भरतमल्लिकटीका)
२. तत्रैव २।३३
३. तत्रैव २।३७
४. तत्रैव २।३७ (भरतमल्लिकटीका)
५. कुमार० ७।१९

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥[1]

घनैर्नवं पयो मया च विप्रयोगाश्रु इत्युभयत्रैकवचनप्रयोगो जात्येकवचनम् इत्यनेन तु सिध्यत्येव परं कवेरत्र किमपि विशिष्टाभीष्टमस्तीत्यवधारणीयम् । प्रकृत्या धीरो रामो न सहसा रोदितुमारभत । धीरस्वभावात्तेन बहुकालमात्मा स्थिरीकृतः किन्तु नवजलधरेण यदा स्वकीयं नवं पयो विसृष्टं तदा तेनापि विरहविधुरेण पक्ष्मलग्नं मुक्तास्थूलं विप्रयोगाश्रु भूमौ विसृष्टम् । यदि कश्चिद् दर्शकस्तत्र भवेत्तेन रामस्याश्रु एव दृष्टं स्यान्नत्वश्रूणीति यावत् । शाकुन्तलेऽपि तथा—

अश्रु च कपोलपतितं दृश्यमिदं वर्त्तिकोच्छ्वासात् ॥[2]

इत्यत्र अश्रु इत्येकवचनं नितान्तमुपयुक्तम् । चित्ररचनावसरे कदा अश्रु चित्रार्पितायाः शकुन्तलायाः कपोले पतितमिति न ज्ञायते वर्त्तिकोच्छ्वासादेव दृश्यं भवति तदिति दुष्यन्तस्य विरहशून्यहृदयावस्था तु सूच्यत एव, एकवचनात्मकेनाश्रुपदेन भावगाम्भीर्यमपि तस्य लक्षितं भवति । अन्यथा कथमेवमेवाश्रु कपोले पतितं कथन्नाश्रूणि तत्र विसृष्टानि । युक्तम् । गभीरधीजनो न सामान्यजनवन्मुक्तकण्ठं रोदिति । स तु यावद्दुःखमश्रुबिन्दुं पक्ष्मण्येव निरुणद्धि दुःखातिशयत्वमसहमानस्यैव तस्य नेत्राश्रु निःसरति न त्वश्रूणि लुठन्ति । एवमत्रैकवचने यदौचित्यमस्ति तत्कवेः शब्दपरिपाकसूचकम् ।

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यति कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥[3]

भुज इत्येकवचनेन पराऽनपेक्षत्वं ध्वन्यते । एक एव भुजो यदा विघ्नानपोहितुं शक्यस्तदान्यस्य काऽपेक्षा । साध्वत्र कविरेकवचनस्य प्रयोगं विदधाति ।

आयुष्मन्, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः ।[4]

इति मातलिवचने चक्षुषा' इत्येकवचनप्रयोगेण कश्यपादितिरूपयोः पुत्र-

---

१. रघु० १३।२९
२. शाकु० ६।१५
३. तत्रैव १।१३
४. तत्रैव ७।२७।२

प्रीतित्वात् स्तिमितनयनत्वं सूचयति । एकवचनञ्चैवं साभिप्रायमत्र प्रयुक्तम् । जात्यैकत्व तु सिध्यत्येव ।

एवमुपर्युक्तैरुदाहरणैरिदं सिध्यति यत्र विपुलावतसस्य कालिदासस्य वचनप्रयोगेऽपि परिपाक इति ।

## (ग) दीर्घसमासप्रयोगौचित्यम्

महाकविकालिदासस्य कृतयो वैदर्भीप्रधानाः । वैदर्भी सर्वोत्कृष्टा रीतिरस्तीत्यालङ्कारिकाः । अनयैव च रीत्या कविरसौ स्वकीयानि काव्यरत्नान्यलञ्चकार । वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते इति नितरां युक्तियुक्तं केनापि काव्यरसनिष्णातेन भणितम् । ओजःप्रसादमाधुर्यप्रभृतयो वैदर्भीरीतिपोषका गुणाः कालिदासकाव्येषु सर्वत्र लावण्यमावहन्ति । तस्मादेव कश्चिदेवमाह—

अनघा गुणसम्पूर्णा समुचितविच्छित्तिरीतिरसौ ।
प्रस्तुतरससन्दोहा सरस्वती जयति कालिदासस्य ॥ इति ।

सरलातिसरलैः सुललितपदबन्धैः कविरयं यथेष्टप्रभावमुत्पादयन् काव्यरसपिपासूनां मनोभावानुसारं काव्यसरणिं सञ्चालयति । इष्टप्रभावोत्पादनार्थं स्वयं वैदर्भीनियममप्युल्लङ्घ्य दीर्घसमासानां प्रयोगं विदधाति यत्र तत्र । वैदर्भीपरिभाषाप्रसङ्गे समासाभावता सर्वैरेवालङ्कारिकैः प्रतिपादिता । तथा हि—

सापि समासाभावे शुद्धवैदर्भी[1] इति वामनः ।

अत्र वृत्तिश्च सापि वैदर्भी शुद्धवैदर्भी भण्यते, यदि समासवत् पदं न भवति ।

यदस्यर्थं च स तया वशंवदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च जगाद सा वैदर्भी रीतिः[2] इति राजशेखरः ।

माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥[3] इति विश्वनाथः ।

---

१. काव्यालङ्कारसूत्रवृत्तिः १।२।१६
२. काव्यमीमांसा तृतीयोऽध्यायः
३. साहित्यदर्पणः ६।२-३

वृत्तेरसमासाया वैदर्भी रीतिरेकैव[1] इति रुद्रटः ।

एवं समासराहित्यमल्पसमासत्वं वा वैदर्भीरीतेर्मुख्यो गुणोऽस्तीति सर्वत्र लक्ष्यते । अस्माकं कवेरपि नास्ति दीर्घसमासेष्वासक्तिस्तथापि प्रसङ्गानुकूलं तेन बहुशो दीर्घसमासाः प्रयुक्ताः । एतदेवात्र प्रतिपादनीयं यद् वैदर्भीप्रियः कविरयमिष्टप्रभावोत्पादनार्थं दीर्घसमासानपि यथावसरं प्रयुङ्क्ते । शतशश्चैदृशाः प्रसङ्गा वर्तन्ते कविकृतिषु यत्र दीर्घसमासप्रयोगो नितरामौचित्यसूचकः प्रतिभाति ।

यथा हि—

रघुवंशे—

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।[2]

इत्यत्र दिलीपसुदक्षिणयोर्दीर्घाध्वलङ्घने रथक्षोभपरिश्रमाधिक्यं तस्य चातिथ्यक्रियया शान्तिरित्युपक्रमो यथा दीर्घसमासेन प्रभाव्यते न तथा लघु समासेन ।

तच्छिष्याध्ययननिवेदितावसानाम् ।[3]

रात्रेरवसानसूचने वसिष्ठशिष्याणामध्ययनसंलग्नत्वमत्र दीर्घसमासेन सम्यगुपपादितम् ।

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।[4]

त्रिकूटपर्वतविशेषणे दीर्घसमासप्रयोगः सुतरामुपपन्नः ।

नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥[5]

रघोः पर्वतीयगणैर्घोरयुद्धवर्णने नाराचाश्मघर्षणप्रभावोत्पादने च दीर्घसमासौचित्यं विद्यते नूनम् ।

शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः[6]

शापयन्त्रितत्वात् कचग्रहो यद्यपि पौलस्त्येन न कृतस्तथापि दीर्घसमास-

१. काव्यालङ्कारः २।६
२. रघु १।५८
३. तत्रैव १।९५
४. तत्रैव ४।५९
५. तत्रैव ४।७७
६. तत्रैव १०।४७

प्रयोगेण बलात्कचग्रहणाभावः सम्यगुपस्थापितः ।

जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ।[१]

वामनस्य सर्वचिह्नसमन्वितत्वमुत्कृष्टत्वं चात्र दीर्घबन्धेन सूच्यते ।

दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ।[२]

रामरावणयोर्जयशब्दस्य दिग्विजृम्भणे दीर्घसमासप्रयोगो दर्शनीयस्तावत् ।

रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम् ।[३]

इत्यत्र सीताया उद्भ्रान्तचेतनात्वं दीर्घसमासेन सम्यगुपलक्षितम् ।

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ।[४]

मेघनादास्त्रबन्धने दीर्घबन्धः समुचितः ।

स मारुतिसमानीतमहौषधिहृतव्यथः ।[५]

मारुतिना महौषधिसमानयनं तत्प्रयोगेण च लक्ष्मणव्यथाहरणमिति दीर्घोपक्रमो दीर्घसमासेनैव वर्णितः ।

नामाङ्करावणशराङ्कितकेतुयष्टिम् ।[६]

हरिसहस्रभुजस्य रथस्य विशेषणे दीर्घसमास उपपन्न एव ।

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाः[७]

दीर्घिकाणां विशेषणे दीर्घसमासः स्वाभाविकः ।

कुमारसम्भवे यथा—

प्रार्थितजटामौलिविलम्बिशशिकोटयः ।[८]

रुद्रमूर्ध्नां विशेषणे दीर्घसमासप्रयोगेण रुद्राणां प्रभावातिशयो द्योत्यते । तादृशाः प्रभावशालिनो रुद्रा अपि साम्प्रतं कथं क्षतहुङ्कारशंसिनो जाता इति वेधसः प्रश्नः ।

---

१. रघु० १०।६०
२. तत्रैव १२।७२
३. तत्रैव १२।७४
४. तत्रैव १२।७६
५. तत्रैव १२।७८
६. तत्रैव १२।१०३
७. तत्रैव १६।१३
८. कुमार० २।२६

मन्दानिलोद्‌धूतकमलाकरशोभिना ।[1]

इन्द्रनेत्रसहस्रकृते दीर्घसमासोपपत्तिः ।

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः ।[2]

दीर्घसमासेनात्र मधुमखस्य कामस्य कार्यपरता द्योत्यते ।

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।[3]

विद्याधरपङ्‌क्तयोऽध्वगपङ्क्तयस्य सन्तानकतरुच्छायासु सुप्ता इति समासेन कदाचिद् ध्वनितं स्यात् ।

प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।[4]

अरुन्धतीप्रभृतिभ्यः पार्वतीप्रणामोपक्रमे दीर्घसमासः प्रयुक्तः । तथावनता सा यत्तस्याः कर्णकुण्डलेऽपि स्रस्ते ।

मेघदूते च—

बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥[5]

हरशिरश्चन्द्रिकया अलकाहर्म्याणां सततधावनमत्र दीर्घसमासेन परिलक्ष्यत इव । नैकं हर्म्यं धौतं हर्म्यपङ्‌क्तयो धौता इति युक्ततरं प्रतिभाति ।

गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां[6]

पुष्पलावीनां श्रमस्वेदातिशयत्वं सूचयितुं दीर्घसमास उपपन्नः ।

तोयक्रीडानिरतयुवतिस्नानतिक्तैः[7]

सतततिक्तत्वं मरुतां द्योतयितुं दीर्घसमासप्रयोगः स्यात् ।

स्वग्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः ।[8]

वायोर्वसुधागन्धसम्पर्कातिशयत्वं प्रकटयितुं दीर्घबन्धौचित्यमत्र विद्यते,

१. कुमार० २।२६
२. तत्रैव २।६४
३. तत्रैव ६।६१
४. तत्रैव ६।६१
५. मेघ० १।८
६. तत्रैव १।२७
७. तत्रैव १।२६
८. तत्रैव १।४४

तद् यथा—

सुमुलकरकावृष्टिपातावकीर्णान्[1]

करकावृष्टिपाते दीर्घसमासत्व युक्तियुक्तम्। यतो हि तेन भूयान् प्रदेश प्रावृतो भवति।

दशमुखभुजोच्छ्वासितप्रस्थसन्धेः[2]

दशमुखभुजबाहुल्यसूचने दीर्घसमास.।

कनकसिकतामुष्टिनिक्षेपगूढैः।[3]

कन्यानां क्रीडाविरतत्वदर्शनाय दीर्घबन्धप्रयोगः।

ऋतुसंहारे च—

नदीपर्वतोपवनवनान्तानां वर्णने प्रयुक्ता दीर्घसमासा द्रष्टव्यास्तावद्—

चञ्चन्मनोज्ञशफरीरसनाकलापाः
पर्यन्तसंस्थितसिताण्डजपङ्क्तिहाराः।
नद्यो विशालपुलिनान्तनितम्बबिम्बा
मन्दं प्रयान्ति समदाः प्रमदा इवाद्य॥[4]

इत्यत्र नदीनां शफरीरसनाकलापप्रसङ्गे धवलमरालश्रेणीहारवर्णने च दीर्घसमासप्रयोगः साधीयान्।

एवञ्च—

कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसचयाकुलतीरदेशाः।
कुर्वन्ति हंसविरुतैः परितो जनस्य
प्रीतिं सरोरुहरजोरुणितास्तटिन्यः॥[5]

इत्यत्रापि तथैव नदीवर्णने दीर्घसमासप्रयोगः।

नानामनोज्ञकुसुमद्रुमभूषितान्तान्
हृष्टान्यपुष्टनिनदाकुलसानुदेशान्।

---

१. मेघ० १।५७
२. तत्रैव १।६१
३. तत्रैव २।६
४. ऋतु० ३।३
५. तत्रैव ३।८

शैलेयजालपरिणद्धशिलातलान्तान्
दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः ॥[1]

सुविशालानां क्षितिभृतां वर्णने दीर्घसमासत्वमत्र युक्तियुक्तम् ।

शेफालिकाकुसुमगन्धमनोहराणि
स्वस्थस्थिताण्डजकुलप्रतिनादितानि ।
पर्यन्तसंस्थितमृगीनयनोत्पलानि
प्रोत्कण्ठयन्त्युपवनानि मनांसि पुंसाम् ॥[2]

इत्यत्रोपवनानां कुसुमगन्धातिशयत्वं पक्षिकुलप्रतिनादितत्वं मृगकुलसंकुलत्वञ्च दीर्घबन्धेरुपस्थापितम् ।

सम्पन्नशालिनिचयावृतभूतलानि
स्वस्थस्थितप्रचुरगोकुलशोभितानि ।
हंसैः ससारसकुलैः प्रतिनादितानि
सीमान्तराणि जनयन्ति नृणां प्रमोदम् ॥[3]

सीमान्तराणां प्रसङ्गे चात्र दीर्घसमासप्रयोगः । सीमान्तरदर्शने यथा दीर्घदृष्टिरपेक्ष्यते तथैव सीमान्तरवर्णने दीर्घबन्धौचित्यम् ।

वनान्तवर्णनेऽपि तथा दीर्घसमासोपपन्नत्वं दर्शनीयम्—

पटुतरदवदाहोच्छुष्कसस्यप्ररोहाः
परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापक्षीणतोयाः समन्तात्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥[4]

भयप्रदानां वनान्तानां वर्णने दीर्घसमासाः समुपचिताः ।

शाकुन्तले यथा—

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः ।[5]

---

१. ऋतु० ६।२७
२. तत्रैव ३।१४
३. तत्रैव ३।१६
४. तत्रैव १।२२
५. शाकु० १।३१

स्यन्दनालोकभीतगजस्य विशेषणे दीर्घबन्धप्रयोगेण तस्य क्रियास्वरूपस्य यथार्थवर्णनमालक्ष्यते । व्रततिवलयपाशवर्णने दीर्घसमासौचित्यं प्रशंसनीयम् ।

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं[1]

अनवरतधनुर्ज्यास्फालनप्रसङ्गे दीर्घबन्धत्वं नितान्तमुपयुक्तम् ।

विक्रमोर्वशीये च—

तरुकुसुमकिसलयभूषितनिजदेहप्राग्भारः ।[2]

प्रियाविरहोन्मत्तगजेन्द्रस्य विशेषणे दीर्घसमासत्वमुपपन्नम् ।

पूर्वदिक्पवनाहतकल्लोलोद्गतबाहुर्मेघाड्नंर्त्स्यति सललितं जलनिधिनायः । हंसविहङ्गपकुङ्कुमशङ्खकृताभरणः करिमकराकुलकृष्णकमलकृताभरणः । वेलासलिलोद्वेल्लितदत्तहस्ततालोऽवस्तृणानि दशदिशो दृष्ट्वा नवमेघकालः ॥[3]

जलनिधिनाथवर्णने दीर्घसमासप्रयोगः सङ्गतः ।

अभिनवकुसुमस्तवकितरुवरस्य परिसरे
मदकलकोकिलकूजितरवझङ्कारमनोहरे ।[4]

इत्यत्र नन्दनवनवर्णने दीर्घसमासत्वं तदनुरूपमेव ।

उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छदः [5]

इत्यत्र षट्पदघटां वर्णयितुं दीर्घबन्धौचित्यं विद्यते ।

मालविकाग्निमित्रे पुनः—

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।[6]

अन्तःपुरवनिताव्यापारप्रतिनिवर्तनोपक्रमे दीर्घसमासप्रयोगः सुतरामुपपन्नः ।

---

१. शाकु० २।४
२. विक्रमो० ४।५
३. तत्रैव ४।५४
४. तत्रैव ४।५६
५. तत्रैव ४।६२
६. माल० २।१४

विकीर्णकुरवकफलजालकमिद्यमानसहकारम् ।[1]

वसन्ततौ परिणामाभिमुखस्य यौवनस्य विशेषणत्वे दीर्घबन्धोऽयमतीव समीचीनः ++ ।

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि विनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥[2]

सैन्यवर्णनप्रसङ्गे दीर्घसमासानां प्रयोगो युक्तियुक्तः । उपर्युक्तेषूदाहरणेषु च सर्वत्र प्रसङ्गानुकूलं दीर्घबन्धौचित्यं परिलक्ष्यते ।

**सारांशः**

शब्दानां यथार्थप्रयोगवत् प्रसङ्गानुकूलं यथोचितलिङ्गविधानमपि कालिदासस्य वैशिष्ट्यम् । एवमेव क्वचिद् बहुवचनप्रयोगेण क्वचिद् द्विवचनप्रयोगेण क्वचिद् एकवचनेन भावविशेषः प्रकटीक्रियते । वैदर्भीप्रियोऽपि कविरयमिष्टप्रभावोत्पादनाय वैदर्भीनियमानुल्लङ्घ्य प्रसङ्गानुसारं दीर्घसमासान् यदि प्रयुङ्क्ते तत्कवेः समुचितपदप्रयोगपरत्वमेव ।

---

१. माल० ३।४
२. तत्रैव ५।१०

# पञ्चमः परिच्छेदः

## कालिदासस्य वाक्ये शब्दनियोजनौचित्यम्

शब्दशास्त्रनिपुणो महाकविः कालिदासः शब्दानां चयने तु दक्षोऽस्त्येव, शब्दानां यथास्थानविन्यसनेऽपि सोऽद्वितीयः। संस्कृतव्याकरणस्य पूर्णत्वाद् तदाश्रित वाक्य केनापि प्रकारेण कथनीयं भवति। कर्तृपदं पूर्वं स्यात् क्रियापद या क्रियाविशेषणपदं वा व्याकरणदृष्ट्या न किमप्यन्तरं विद्यते। विद्यतेऽन्तरं केवलं प्रभावोत्पादने। क्रियापदस्य वाक्यारम्भे नियोजनेन कदाचिद् यः प्रभावो भाव्यते न स कस्याप्यन्यस्य पदस्य प्रयोगेण। सर्वनामपद कदाचिदतिप्रभावकारि क्रियाविशेषणपदं कदाचित् शब्दन्यायनिष्णातस्य कालिदासस्य सुविदितमिदं तथ्यम्। संस्कृतभाषायां शब्दविन्यासस्येदं स्वातन्त्र्यं पद्यरचनायामतीव सहायक भवति। अस्मादेव कारणाद् संस्कृतकविः शब्दानामानुपूर्व्यप्रयोगेण सारल्येन च्छन्दांसि रचयितुं शक्नोति। तत्किं कालिदासोऽपि केवलं छन्दसां रचनार्थं शब्देषु पौर्वापर्यभावं मनुते। नैवम्। नासौ कविः छन्दसामधीनः, महाकवेरस्य तु हृदयसागरादनायासेन निस्सृताः समुचितस्थानविन्यस्ताश्च शब्दाः सुतरां प्रभावोत्पादकाः भवन्ति। मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्[1] इति वाक्यस्य पदद्वयमेव मन्दभावं प्रकटयति। वाक्यारम्भे न्यस्तं मन्द मन्दमिति क्रियाविशेषणपदञ्चोच्चार्यमाणमेव समग्रभावं प्रकटयति।

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।[2]

इत्यत्र वाक्यारम्भे गच्छतीति क्रियापदं यथा प्रभावोत्पादकं न तथाऽन्यत्किञ्चित्पदम्। कर्तृपद शरीरमिति न तथा महत्त्वपूर्णं यथाऽस्य गमनक्रिया। तेनैवात्र गच्छतीति क्रियापदस्यैव सर्वतः प्रागुपादानमभिप्रेतं कवेः द्वितीयेऽपि पादे तथैव धावतीति क्रियापदमेव कर्तुः पूर्वं साभिप्रायं निहितम्। चेतसः पश्चाद्धावने बलप्रदानहेतोर्धावतीति पूर्वं कथितम्। एवञ्च प्रतिवात नीयमानस्य इत्यत्र नीयमानस्येतिपदस्य पादान्ते निधानेन हठादुत्सारण स्पष्टं भवति। कालिदासस्य शब्दविन्यासकौशल तु प्रतिपदमेव दृश्यते। किन्त्वस्मिन् परिच्छेदे

---

१. मेघ० १।१०

२. शाकु० १।३२

केवलं वाक्यरम्भप्रयुक्तानां क्रियापदानां क्रियाविशेषणपदानां सर्वनामपदाना-ञ्चौचित्यप्रदर्शनार्थमुदाहरणानि प्रस्तूयन्ते ।

## (न) वाक्यारम्भे क्रियापदौचित्यम्

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।[1]

इत्यस्मिन् रघुवंशीये श्लोके दिलीपचरित्रवर्णने वाक्यारम्भे जुगोप इति क्रियापदं समुचितभावप्रबोधने नितान्तमुपयुक्तम् । जुगोपात्मानम् इत्येताव-च्छ्रवणेन निस्सन्देहमौत्सुक्यमेका जिज्ञासा बोत्पद्यते किं महाराजो दिलीपोऽप्या-त्मनो रक्षामपैक्षत, किं तस्यापि कस्माच्चिद् भयमासीद् यतः स्वात्मानं जुगोप एवमेतामुत्सुकतामुत्पाद्य तदनन्तरमनुपदमेव 'अत्रस्ते'ति पदं प्रयुज्य जिज्ञासा-निवारणं कृतम् । जुगोपात्मानं न तु भयादपि तु त्रासरहितः सन् । अनया वाक्यरचनया यः प्रभावः पाठकस्य हृदयपटलेऽङ्कितो भवति स नान्यथा प्रयोगेण सम्भाव्यते । द्वितीये पादेऽपि यथा भेजे धर्ममनातुरः इत्यत्रापि भेजे इति क्रियापदमेव पूर्वमुपात्तम् । भेज इत्यस्य पदस्योच्चारणेनैव प्रश्नः समुत्ति-ष्ठति किं भेज इति । तदनन्तरं कथितं धर्ममिति धर्मार्जने किं विघ्नो न कश्चि-दायातः श्रेयांसि बहुविघ्नानीति वचनाद् एवमस्याः शङ्कायाः समाधानमनातुर इति पदोपादानेन कृतम् । एतत्स्थाने अनातुरो धर्मं भेजे इति प्रयोगे न तावती प्रभावोत्पादनक्षमता विद्यते । एवं यत्र तथाऽरम्भस्य वाक्यविन्यासस्याय-श्यकतापेक्षिता तत्र तथैव कविना विहितम् । अस्यैव श्लोकस्य तृतीयपादे यथा अगृध्नुराददे सोऽर्थम् इत्यस्यां वाक्यरचनायाम् अगृध्नुर् इति पदमेव सर्वतः प्राक् प्रयुक्तम् । किमर्थम् ? सोऽर्थमाददे इत्यस्य पूर्वप्रयोगो मनसि किमपि घृणाभावमुत्पादयति । भावोऽयं येन नोत्पद्येतेत्यस्माद्धेतोः सर्वप्रथमम् अगृध्नु-रिति वचसा स्पष्टं यत्तस्य राज्ञो नासीद्धनलोलुपत्वं स तु प्रजानां हितायैव धनमाददे । एवमेव असक्तः सुखमन्वभूद् इति वाक्ये असक्त इति क्रियाविशेषण-पदस्य सर्वतः प्राक् प्रयोगो दिलीपचरित्रं सुतरां प्रस्तौति । सुखमन्वभूद् इत्येतस्य पूर्वप्रयोगो नूनं नृपस्य चरित्रे किमपि हीनत्वमुत्पादयेत् किन्तु सर्वतः प्राक् *विशेषणपदम् असक्त इति प्रयुज्य तदनन्तरं सुखमन्वभूत् इति प्रयोगेण* वस्तु-स्थितिं स्वतः स्पष्टीकृत्य दिलीपचरितमप्युन्नायितम् ।

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।[2]

---

१. रघु० १।२१
२. तत्रैव १।२६

इत्यस्मिन् वाक्ये दुदोह इति क्रियापदस्य पुरस्करणं दोहनकर्मणः प्राधान्य-सूचनाय विधीयते यच्चेन्द्रदिलीपाभ्यां युगपत् सम्बद्धमस्ति ।

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।[१]

दिलीपे वनं प्रविष्टे सत्येव दवाग्निः शशामेति कथनाय शशामेति क्रियापदस्य वाक्यारम्भे निधानं महाकवेरेव तव प्रसादस्य पुरस्तु सम्पदः[२] इति वाक्यं स्मारयति द्वितीये च पादे आसीदिति क्रियापदं फलपुष्पवृद्धेः सत्तां प्रकटयितुमथ वा सत्तारूपपरिणामं प्रदर्शयितुमेव पुरस्स्थापितम् ।

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।[३]

इत्यत्र प्रत्यब्रवीदिति क्रियापदस्य वाक्यारम्भे स्थितिः पूर्वपद्यस्यान्तिमपदेन शिथिलीचकारेत्यनेन सह समुच्चयसम्बन्धं प्रकटयितुं नितान्तमुपयुक्तास्ति । आत्मन्यवज्ञां शिथिलीचकार । प्रत्यब्रवीच्च इत्येतादृशः प्रयोगो महाकवेर्भाषा-प्रवाहे सुगमतां परिलक्षयति ।

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ।[४]

इत्यत्र माङ्गलिकानां लाजानां वर्षणकर्मणः प्राधान्याद् अवाकिरन् इति क्रियापदस्यैव पूर्वोपपत्तिः ।

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ।[५]

वाहानां गात्रशिञ्जितैर्वर्मभिस्तालीवनध्वनेरभिभावनमेव शिञ्जनोत्कर्षे हेतुस्तेनात्र अभ्यभूयत इति क्रियापदं सर्वतः प्राक् प्रयुक्तम् ।

अनयत्प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरम् ।
अपरः प्रणिधानयोग्यया मरुतः पञ्चशरीरगोचरान् ॥[६]

अजस्य रघोश्चोभयोरेव अनयदिति क्रियापदेन सम्बन्धात् प्राधान्यद्योत-

---

१. रघु० २।१४
२. शाकु० ७।३०
३. रघु० २।४२
४. तत्रैव ३।२७
५. तत्रैव ४।५६
६. तत्रैव ८।१९

नायं वाक्यारम्भे क्रियापदस्य प्रयोगो युज्यते ।

अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।[1]

अकरोद् इति क्रियापदं वाक्यारम्भे प्रयुज्य कविर्महाराजस्याजस्य क्रियाशक्तिमसूचयद् अपि च अकरोद् इत्यस्य प्रयोगेणैका जिज्ञासा समुत्पाद्यते कः अकरोद् किमकरोद् इति तदनन्तरञ्च स्पष्टीकृतवान् कविः अचिरेश्वरः (अजः) अकरोद् द्विषदारम्भफलानि भस्मसादकरोद् । एवमेतत्सर्वं काव्यरचनायाः स्वाभाविकमुपक्रमयुपलक्षयति ।

निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।[2]

आनन्तर्यसूचकाद् अथेति निपातात्प्रागेव निर्ययाविति क्रियापदस्य प्रयोगः प्रासादान्निष्क्रमणे रावणस्य नितान्तमौद्धत्यं सूचयति । यथा कश्चित्सिंहो गर्जन् कन्दरान्निर्गच्छति तस्य पादोपक्रममिव लक्षयितुं निर्ययाविति क्रियापदस्य वाक्यारम्भे प्रयोगः ।

अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।[3]

अवैमीति क्रियापदस्य सर्वतः प्राक् प्रयोगेण रामस्य मानसिकी व्यथा सुतरां लक्ष्यते । सीताया अनघात्वं च अवैमीत्यस्य पूर्वप्रयोगादेव स्पष्टीकृतम् ।

जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।[4]

इत्यत्र वानरैः राक्षसैश्च रामपदव्या ग्रहणमेव प्राधान्येन सूचयितव्यमस्ति । तेनात्र जगृहुरिति क्रियापदमेव वाक्यारम्भे प्रयुक्तम् ।

अवैमि कार्यान्तरमानुषस्य विष्णोः सुताख्यामपरां तनुं त्वाम् ।[5]

नागराजस्य कुमुदस्य कुशविषयकं ज्ञानं द्रढयितुमेवात्र अवैमीति क्रियापदं वाक्यारम्भे प्रयुक्तम् ।

शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत् ।[6]

---

१. रघु० ८।२०
२. तत्रैव १२।८३
३. तत्रैव १४।४०
४. तत्रैव १५।९९
५. तत्रैव १६।८२
६. तत्रैव १७।२९

मङ्गलायतनस्य शोभासम्पन्नत्वमेवात्र प्राधान्येन वर्णनीयमस्ति तेनैव शुशुभ इति क्रियापदस्य प्राक् प्रयोग । एवमग्रिमे पद्येऽपि—

बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः ।[१]

इत्यत्र राजकुमारस्य शोभासमुदयत्वसूचनार्थं बभाविति क्रियापदस्यैव वाक्यारम्भे विधानम् ।

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।[२]

आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम् इति महाकाव्यारम्भविधिविधानात् वस्तुनिर्देश एव कुमारसम्भवारम्भाय महाकवेरभीष्टस्तत्रापि हिमाचलस्य सर्वेषां विदितत्वात् ख्यातिमभिव्यञ्जयितुम् अस्तीति क्रियापदस्य सर्वतः प्राक्प्रयोगो विहितः । अपि च—

अस्ति क्रियापदोपादानात् सदा सम्बन्ध उक्तस्तेनैवास्तेर्वर्तमानविहितः प्रत्ययः, तथा च नित्यानां सदा सम्बन्धवत्त्वाद्वर्तमानविहितप्रत्ययो भवतीति वृद्धाः । इति भरतमल्लिकपादाः ।[३]

एवमत्र महाकाव्यारम्भे वाक्यारम्भे च अस्तीति क्रियापदस्यौचित्यं स्पष्टम् ।

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।[४]

ते कामदेवस्य सार सुतरां जानामीति भावं स्पष्टीकर्तुं वाक्यारम्भे अवैमीति-क्रियापदं प्रयुक्तम् ।

असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां सम्पर्कमाशिञ्जितनूपुरेण ॥[५]

आशिञ्जितनूपुरेण सुन्दरीणा पादेन सम्पर्कमनपेक्ष्यैवाशोकः कुसुमान्यसूत इत्यत्र तरोः पुष्पप्रसवस्य प्राधान्यमभिलक्षयितुमत्र असूतेति क्रियापदं वाक्यारम्भे प्रयुक्तम् ।

---

१. रघु० १७।३०
२. कुमार० १।१
३. तत्रैव (रामचन्द्रकाव्यतीर्थसम्पादितम्, पृ०४)
४. तत्रैव ३।१३
५. तत्रैव ३।२६

स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।[1]

प्रश्नार्थे स्मरसीति क्रियापदस्य वाक्यारम्भे प्रयोगः सर्वथा समीचीनो विद्यते ।

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।[2]

क्रियतामिति क्रियापदस्य वाक्यारम्भे प्रयोगोऽन्त्यमण्डनस्यासम्भवत्वसूचनार्थं कृतः । कामपत्न्या आन्तरिकी व्यथा असामर्थ्यंऽन्याजेन सम्यग् व्यज्यते ।

इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।[3]

अवन्ध्यरूपताकरणे पार्वत्या अभिलाषोऽत्यर्थं प्रकटयितुं कविना इयेषेति क्रियाशब्दस्य वाक्यारम्भे प्रयोगः कृतः ।

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।[4]

पार्वत्याः प्रत्युत्तरदानस्य महत्त्वं सूचयितुमत्र उवाचेति क्रियापदस्य सर्वतः प्राक् स्थितिः ।

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥[5]

इत्यत्र मुनिजनपादक्षालनजलस्य गङ्गाजलसाम्यं प्रख्यापयितुम् अवैमीति क्रियापदमादौ प्रयुक्तम् ।

मेने मेनाऽपि तत्सर्वं पत्युः कार्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥[6]

पत्युरभीप्सितकार्यस्याङ्गीकरणमेव पतिव्रतानां परमं व्रतमतः सर्वतः प्राक् मेन इति क्रियापदेन तत्साम्यमुपस्थापितम् ।

---

१. कुमार० ४।८
२. तत्रैव ४।२२
३. तत्रैव ५।२
४. तत्रैव ५।७५
५. तत्रैव ६।५७
६. तत्रैव ६।८६

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥[१]

भस्मैव सिताङ्गरागो बभूव, कपालमेवामलशेखरश्रीर्बभूव, गजाजिनस्यैवोपान्तभागेषु रोचनाङ्को दुकूलभावो बभूवेति सर्वेषु बभूवेति क्रियापदस्य सम्बन्धादस्य वाक्यारम्भे विधानं युज्यते ।

सस्वजे प्रियमुरोनिपीडिता प्रार्थितं मुखमनेन नाहरत् ।[२]

पार्वत्या स्मरातिशयत्वं सूचयितुमत्र सस्वज इति क्रियापदमादौ प्रयुक्तम् । सस्वजे सा न तु निष्पन्दमास्तेत्ययं स्पष्टयितुमेव क्रियापदस्य प्राग्विधानम् ।

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।[३]

पश्येति क्रियापदं वर्ण्यमानं प्रत्यवधानार्थमत्र सर्वतः प्राक् प्रयुक्तम् ।

उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥[४]

वन्यवराहाणां पल्वलात् निर्गमनमूचनस्यैवात्र प्राधान्याद् उत्तरन्तीति क्रियापदस्य वाक्यारम्भे विधानं युक्तम् ।

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्[५]

दयिताजीवितालम्बनार्थी यक्षः मद्य एव मेघं प्रियासविधे प्रापयितुमिच्छति तेनैव स आपृच्छस्वेति क्रियापदेन वाक्यमारभते । कामी स्वतां पश्यतीति अस्यैव महाकवेर्वचनादत्रापि स्वाभिप्रायरूपताकारणात् शीघ्रमापादयितुं यक्षो ननु कालिदास आपृच्छस्वेति क्रियापदं सर्वतः प्राक् प्रयुङ्क्ते ।

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ॥[६]

इत्यत्रापि यक्षः प्रतिपर्वतं नानाविधरम्यस्थानावलोकनेच्छया मेघस्य

१. कुमार० ७।३२
२. तत्रैव ८।१४
३. तत्रैव ८।३४
४. तत्रैव ८।३५
५. मेघ० १।१२
६. तत्रैव १।२४

प्रियासमीपे प्राप्तो विलम्बमवधारयन् वतिष्यमाण तत्सर्वं तत्रस्थ एवोत्प्रेक्षते। तत्सर्वं विलम्बकारणं तस्याक्ष्णोः पुरतः प्रतीयत इत्यस्माद्धेतोरनायाममेव तस्य मुखादुत्पश्यामीति क्रियापदं सर्वतः प्राङ् निस्सरति।

एवञ्च—

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य।[1]

इत्यत्राप्युत्प्रेक्षासूचनस्य प्राधान्यात् तदर्थक्रियापदमेवारम्भे प्रयुक्तम्।

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा।[2]

दुर्लभप्रार्थनरदमुपदर्शयितुमेवात्र वाक्यारम्भे विधिलिङि क्रियापदस्य प्रयोगो विहितः।

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः।[3]

इत्यत्र विहगवर्गस्य श्वासप्रक्रियासूचनाय श्वसितीति क्रियापदस्य वाक्यारम्भे प्रयोग उपपद्यते। द्वितीये पादे तु क्लान्त कपिकुलं प्रति संकेतयितु कपिकुलमिति पदस्यैव पूर्वविधानम्। तृतीये पादे पुनः तोयमिच्छतो गवयूथस्य सर्वतः भ्रमणसूचनार्थं भ्रमतीति क्रियापदस्य पूर्वमुपादानम्। तुरीये च पादे शरभकुलं प्रति संकेतप्रदानार्थं तस्यैव पूर्वप्रयोगः समुचितः एवं यत्र क्रियायाः प्राधान्यमभीष्टं तत्र क्रियापदं वाक्यारम्भे प्रयुक्तं यत्र च कर्तृपदप्राधान्य तत्र कर्तृपदमेव पूर्वं प्रयुक्तम्।

तथैवान्यत्रापि—

ज्वलति पवनवृद्धः पर्वतानां दरीषु
स्फुटति पटुनिनादैः शुष्कवंशस्थलीषु।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
ग्लपयति मृगवर्गं प्रान्तलग्नो दवाग्निः॥[4]

इत्यत्र क्रियायाः प्राधान्यात् क्रियापदमेव सर्वत्र पुरः स्थापितम्।

---

१. मेघ० १।६३
२. तत्रैव २।५१
३. ऋतु० १।२३
४. तत्रैव १।२५

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥[1]

यथासंख्यनियमेनात्र क्रियापदानामेव पूर्वप्रयोगो नितान्तमनोहारी ।

दधति वरकुचाग्रैरुन्नतैर्हारयष्टिं[2]

इत्यत्रापि हारयष्टिधारणस्यैव प्राधान्येन कथनात् दधतीति क्रियापदेन वाक्यारम्भः ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम्[3]

सेनापतिं प्रति दुष्यन्तस्य समादेशस्थापनार्थमत्र गाहन्तामिति क्रियापदस्य वाक्यारम्भे प्रयोगः समुचितः । गाहन्तामिति सर्वतः प्रागुच्चारणेन आदेशोऽयं सर्वथा परिपालनीय इत्यवगम्यते ।

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥[4]

पूर्वस्मिन् पद्ये निर्घृणं तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानीति शकुन्तलावचः श्रुत्वा प्रत्युत्तरदाने तपतीतिक्रियापदस्यैव सर्वतः प्रागुचितः श्रुत भवत्या वचनमित्यर्थमनायासेन सूचयति । द्वितीये च वाक्ये ग्लपयतीति क्रियापदं स्वमतपोषणार्थमारम्भे प्रयुक्तम् ।

यात्येकतोऽस्तशिखरं पतिरोषधीनां[5]

ओषधीपतेरस्तशिखरं प्रति यानमेव सूचयितुं यातीति क्रियापदस्य वाक्यारम्भे प्रयोगः ।

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया[6]

शकुन्तलायाः प्रस्थानमति कष्टदायकमिति यास्यतीति क्रियापदस्य पुरः स्थितत्वेन द्योत्यते ।

---

१. ऋतु० २।११
२. तत्रैव २।२६
३. शाकु० २।६
४. तत्रैव ३।१५
५. तत्रैव ४।२
६. तत्रैव ४।६

यास्यत्यद्य शकुन्तलेति कथनोपक्रम एव कण्वस्य वैक्लव्यं सूचयति।

भवन्ति नम्रास्तरवः फलागमैः[1]

इत्यत्र वाक्यारम्भे भवन्तीति क्रियापदं फलागमैस्तरूणां नम्रत्वस्यावश्यम्भावित्वं सूचयति।

ज्वलति चलितेन्धनोऽग्निः।[2]

परिणामस्य पूर्वोक्त्या प्रभावोत्पादनादत्र ज्वलति इति क्रियापदेन चलितेन्धनस्याग्नेः परिणामस्थापनं कृतम्।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः।[3]

इत्यत्र कर्मसु सिद्धेरेव कारणस्य प्रख्यापनार्थं सिध्यन्तीति क्रियापदं वाक्यारम्भे प्रयुक्तम्।

प्रादुर्बभूवदशया स्थितस्य मुनयो यत्तेजसः कारणम्[4]

मुनीनां कथनस्य महत्त्वं सूचयितुमेवात्र प्रादुरिति क्रियापदं प्रयुक्तम्।

उदेति पूर्वं कुसुमं ततः फलं[5]

फलात्पूर्वं कुसुमस्योत्पत्तिवर्णने उदेतीति क्रियापदमेव सर्वतः प्राक् प्रयुक्तम्।

प्रवर्ततां प्रकृतिहिताय पार्थिवः[6]

राज्ञा प्रकृतिरञ्जनं कवेः सर्वाधिकमिष्टम्। राजा प्रकृतिरञ्जनादित्युक्तमेवानेन रघुवंशे। स एवाभिलापोऽस्यात्रापि प्रकटीभवति प्रवर्ततामिति क्रियापदस्य वाक्यारम्भे प्रयोगात्।

मुञ्चति न तावदस्याः कम्पं कुसुमसमबन्धनं हृदयम्।[7]

१. शाकु० ४।१२
२. तत्रैव ६।३१
३. तत्रैव ७।४
४. तत्रैव ७।२७
५. तत्रैव ७।३०
६. तत्रैव ७।३५
७. विक्रमो० १।८

हृदयकम्पस्येयत्कालं स्थिरता 'मुञ्चति न' इत्यस्य वाक्यारम्भे प्रयोगेण सुतरां गम्यते। अपि च मुञ्चति न इत्युच्चारणमेवोर्वश्याः परित्रासभावं दर्शयति।

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति।[1]

क्व नु खलु सा रम्भोरुर्गता स्यादित्यात्मगत प्रश्नं कृत्वा वाक्यारम्भे सम्भावनायां विधिलिङि क्रियापदस्य प्रयोगो नितान्तमुचितः प्रतीयते।

आलोकयति पयोदान्प्रबलपुरोवातताडितशिखण्डः।[2]

अत्र मेघालोकनेन मयूरस्य भृशमौत्सुक्यं सूच्यते। एवमेव पुरूरवसोऽपि तावत्प्रियादर्शनौत्सुक्यं प्रबलं विद्यते तस्मादेव स्वाभिप्रायसम्बन्धाद् वाक्यारम्भेऽत्र आलोकयतीति क्रियापदं प्रयुङ्क्ते कविः।

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंयुक्तः॥[3]

मणिविशेषस्य आभैवात्र विशेषतो वर्णनीया तेन तदर्थं क्रियापदमाभाती-त्येव सर्वतः प्राक् प्रयुक्तम्।

किमिदानीं शरासनेन। बाणपथमतीतः स क्रव्यभोजनः। तथा हि इति कथनानन्तरं राज्ञा पतत्रिवर्णनमेव समुचितमासीत् किन्तु मणिविशेषस्याभया पक्षिवर्णनं तु दूरङ्गतं मणेराभावर्णनमेव प्रमुखं सञ्जातं तेनात्र वाक्यारम्भे आभातीति क्रियापदमेव प्रयुक्तम्।

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे।[4]

मालविकायाः कोपकारणं पिपृच्छिषताग्निमित्रेण कुप्यसीति क्रियापदं वाक्या-रम्भे नितान्तमुपयुक्तं प्रयुक्तम्।

किमेतत्। कुप्यसि मे इत्यत्र स्थाने कुप्यसि मे किमेतदिति कथनं सातिशयं प्रभावमुत्पादयति।

---

१. विक्रमो० ४।१९
२. तत्रैव ४।१८
३. तत्रैव ५।४
४. माल० ४।१०

विसृज सुन्दरि संगमसाध्वसं तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥[1]

भयत्यागं विशेषयितुमेवात्र विसृज इति क्रियापदं वाक्यारम्भे प्रयुक्तम् । द्वितीये वाक्येऽपि क्रियापदेन नृपतिना स्वाभिलाष एव प्राधान्येन सूचितः । अतिमुक्तलता यथा सहकारमालिङ्गति तथैव त्वमपि मामालिङ्गेत्यालिङ्गनाय निवेदनमेवात्र प्रधानं विद्यते तस्मादेव परिगृहाणेत्यस्य क्रियापदस्य वाक्यारम्भे साधुप्रयोगः ।

उपर्युक्तैरुदाहरणैस्तावत् क्रियापदानां वाक्यारम्भे प्रयोगौचित्यं सुतरां प्रतिभाति ।

## (ख) वाक्यारम्भे क्रियाविशेषणपदौचित्यम्

क्रियापदमिव क्रियाविशेषणपदमपि वाक्यारम्भे प्रयुक्तं कवेः कञ्चिद् भावविशेषं प्रकटयति । यथा—

अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम् ।[2]

शुभंयुना द्वितयेन सङ्गतत्वाच्छोभाधिक्यवर्णनमत्राभीष्टं विद्यते तेन वाक्यारम्भे अधिकमिति क्रियाविशेषणपदमेव निहितम् ।

ध्रुवमस्मि शठः शुचिस्मिते ! विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये यदनापृच्छ्य गतासि मामितः ॥[3]

अनापृच्छ्य परलोकगमने कैतववत्सलत्वज्ञानमेव कारणमित्येतद् द्रढयितुं कविना ध्रुवमिति क्रियाविशेषणपदं वाक्यारम्भे प्रयुक्तम् ।

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥[4]

नवोढा वधूः सदयमेव भोक्तव्या नो चेत्सा उद्वेगं व्रजेदिति भावमवधार्य सदयमिति क्रियाविशेषणस्यैव प्रयोगो वाक्यारम्भे कृतः ।

---

१. माल० ४।१३
२. रघु० ८।६
३. तत्रैव ८।४६
४. तत्रैव ८।७

सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥[1]

मधुः सद्यः द्विरेफान् निवेशयामास इत्युत्तरार्द्धे सङ्गतस्यापि सद्य इति क्रियाविशेषणपदस्य वाक्यारम्भे प्रयोगेण कविस्तात्कालिकं सम्भ्रमत्वं चैतत्प च सुतरां प्रकटयति।

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे ।[2]

यक्षपत्न्यामौत्सुक्यमुत्पादयितुं भूय इति पदस्य वाक्यारम्भे विधानमतीवोपपन्नम्।

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां[3]

अलकां प्रति मेघं प्रेरयितुं तदनुकूलवातावरणसूचनाय मन्दं मन्दमिति क्रियाविशेषणपदस्य पूर्वप्रयोगोऽत्यन्तं स्वाभाविकः।

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।[4]

सर्वतः प्रागसंशयमिति पदप्रयोगो दुष्यन्तस्य मनोदाढ्यं सूचयतितराम्।

कार्त्स्न्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागमानाम् ।
न च प्रियेष्वायतलोचनानां समग्रवृत्तीनि विलोचनानि ॥[5]

पूर्वार्द्धे स्त्रीणां कौतूहलम् उत्तरार्द्धे च निसर्गशालीनत्वम्। कौतूहलप्रदर्शने च कार्त्स्न्येनेति पदस्यैव प्राक् प्रयोगो युक्तः। कविहृदये यो भावः समुत्पद्यते तस्य सर्वाधिकपोषकः शब्द एव सर्वप्रथम हृदयपटलेऽङ्कितो भवति, बहिश्च निस्सरति। तत्पूर्वसमागमानां रूपस्य कार्त्स्न्येन विवर्णनेच्छैवात्र स्त्रीणां कौतूहलं सूचयति। तेनात्र कार्त्स्न्येनेति पदस्यैव पूर्वोपपत्तिः।

---

१. कुमार० ३।२७
२. मेघ० २।५४
३. तत्रैव १।१०
४. शाकु० १।२१
५. माल० ४।८

## (ग) वाक्यारम्भे सर्वनामपदौचित्यम्

शब्दप्रयोगाणां सूक्ष्मातिसूक्ष्मविषयेऽपि दत्तावधानो दृश्यते कविः कालिदासः। सर्वनामपदाना प्रयोगेऽप्यस्य वैचक्षण्य विद्यते। यत्र कुत्रापि सङ्केतवाचीनि सर्वनामपदानि प्रयुक्तानि तत्र इदमस्तु सन्निकृष्टे समीपतरवर्तिन्येतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् इति कथनं सम्यक्तया घटति।

एते वयममी दाराः कन्येयं कुलजीवितम्।[1]

इत्येकस्मिन्नेव वाक्ये सर्वनामत्रयस्य प्रयोगः कवेः शब्दप्रयोगवैदुष्यं सुतरां पुष्णाति। पुरः स्थितायाः कन्यायाः कृत इयमितीदमो रूपं सन्निकृष्टत्वात् तदनन्तरवर्तिन आत्मनः कृत एत इत्येतदो रूपं पश्चाद्वर्तिनीनां दाराणां कृते 'अमी'त्यदसो रूप युक्ततयुक्तं प्रयुक्तम्। सङ्केतवाचिन इमे सर्वनामशब्दाः प्रायेण वाक्यारम्भ एव युज्यन्ते। कालिदासेनाऽपि ते प्रायशस्तथैव प्रयुक्ताः। तथा हि—

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।[2]

न सन्निकृष्टमपि तु किञ्चिद्दूरे वर्तमानं देवदारुं प्रति सङ्केतार्थममुमिति पदस्य वाक्यारम्भे प्रयोगः संयुज्यते। वृक्षस्यासन्निकृष्टत्वादेव अमुमिति पदानन्तर पुर इति पदप्रयोग आवश्यको जातः। एवमत्रादसो रूपमेव सङ्ग-च्छते।

तथैव च—

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः।[3]
असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः।[4]
असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च।[5]
असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पति जयन्तः।[6]
अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि।[7]

१. कुमार० ६।६३
२. रघु० २।३६
३. तत्रैव ६।२१
४. तत्रैव ६।३४
५. तत्रैव ६।५४
६. तत्रैव ६।७८
७. तत्रैव १३।१२

अमूर्विमानान्तरलम्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।[1]
अमुं सहासप्रहितेक्षणानि व्याजार्धसंदर्शितमेखलानि ।[2]
अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।[3]
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।[4]
अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।[5]
अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।[6]
अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।[7]
अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।[8]
अमी वेदिं परितः क्लृप्तधिष्ण्याः ।[9]
अदः सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैत्यान् लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥[10]

इत्यादिषु सर्वत्र वाक्यारम्भे प्रयुक्तमदसो रूपं विप्रकृष्टस्थानभावं सुचारुतमा व्यनक्ति । एवमेव सन्निकृष्टस्य संकेतवाचिन इदमो रूपं वाक्यारम्भे यत्र यत्र प्रयुक्तं तत्र तत्रात्यन्तमुपपन्नम् । यथा—

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी मयावतंसः परिकल्पितस्ते ॥[11]

इत्यत्र वाक्यारम्भे अयमितीदमो रूपं प्रयुज्य कविस्तमालवृक्षस्य सपद

१. रघु० १३।३३
२. तत्रैव १३।४२
३. तत्रैव १६।६१
४. कुमार० २।२४
५. तत्रैव ३।१७
६. तत्रैव ४।२६
७. तत्रैव ४।३४
८. तत्रैव १३।४५
९. शाकु० ४।८
१०. विक्रमो० १।१६
११. रघु० १३।४९

सम्बन्धमभिलषितुकामया सुनन्दया कृतः अनेनेतीदमो रूपस्य प्रयोगो नितान्त-मुपयुक्तो विद्यते । प्रथमपरिचयार्थं तु सा असावित्यदसो रूपमेव प्रयुङ्क्त इति सविशेषं द्रष्टव्यम् ।

एवञ्च—

> अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
> मूर्धानमालि ! क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥[1]

इत्यस्मिन् कुमारसम्भवीयपद्ये अनेनतीदमो रूपमीश्वरस्य शिवस्य महत्त्वमाख्यापयति ।

वटुवेशधारिणं शिवं प्रति पार्वतीपरिचयप्रदानावसरे पार्वतीसखीवचने 'इयम्' इतीदमो रूपमत्यन्तमुपपन्नम् । यथा—

> इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
> अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥[2]

शिवोक्तावपि तथा—

> इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
> विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥[3]

इत्यत्र इयम् इति पदं वाक्यारम्भे प्रयुक्तं विडम्बनायाः पुरः स्थितिं सम्य-ग्रूपेण स्पष्टीकरोति ।

> अयं स ते तिष्ठति संगमोत्सुको
> विशङ्कसे भीरु यतोऽवधीरणाम् ।[4]

इति दुष्यन्तस्य अयम् इति पदेन वाक्यमारभ्यात्मानं शकुन्तलासम्मुखे सहसा प्रकटनमत्यन्तमुपपन्नम् ।

> अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
> र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।

---

१. कुमार० ७।६८
२. तत्रैव ५।५३
३. तत्रैव ५।७०
४. शाकु० ३।१२

गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥[१]

इन्द्रसारथिं रथं दर्शयतो दुष्यन्तस्य वाक्यारम्भे अयम् इति पदेन सङ्केतः सयुज्यते। एवञ्च—

इदं किलाव्याजमनोहरं वपुः[२]
इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृत[३]
इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम।[४]
इदमुपनतमेवं रूपमक्लिष्टकान्ति[५]

इत्यादिषु वाक्यारम्भे इदमो रूपं सन्निकृष्टस्य सङ्केतं समभिव्यञ्जयति।

अयं च गगनात्कोऽपि तप्तचामीकराङ्गदः।[६]

इति विक्रमोर्वशीये समीपमागच्छन्तं चित्ररथं प्रति सूतस्य अयम् इति पदेन सङ्केतो युज्यते।

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे।[७]

प्रत्युत्पन्नयोगस्य विप्रयम् इतिपदेनाभिव्यक्तिः सम्यक्कृता।

अयमचिरोद्गतपल्लवमुपनीतं प्रियकरेण हस्तेन।[८]

इत्यत्र अयम् इति पदं समीपस्थस्य गजस्य कृते सम्प्रयुक्तम्।

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति।[९]

---

१. शाकु० ७।७
२. तत्रैव १।१८
३. तत्रैव ३।११
४. तत्रैव ३।१७
५. तत्रैव ५।१९
६. विक्रमो० १।१५
७. तत्रैव ४।१०
८. तत्रैव ४।४४
९. तत्रैव ३।६

इदं रुणद्धि मां पद्ममन्तः कूजितषट्पदम् ।[1]
इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।[2]

इत्यादिष्वपीदमो रूपं सन्निकृष्टस्य सङ्केताय वाक्यारम्भे नियोजितम् ।

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।[3]

वाक्यारम्भे प्रयुक्तम् अनेनेति पदं चरणस्य महत्त्वाख्यापने सहायकं भवति ।

इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।[4]

इत्यस्मिन्पद्ये सन्निकृष्टार्थे मालविकायै परिव्राजिकया प्रयुक्तम् इमाम् इति पदं युक्ततरम् ।

यथाऽदसो रूपमिदमो रूपं वा वाक्यारम्भे प्रयुक्तं कवेरभीष्टसङ्केतद्योतनाय अलम् तथैवैतदो रूपमपि यत्र तत्र वाक्यारम्भे प्रयुक्तमिष्टार्थप्रतिपत्तये साधु । यथा—

एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्तेन विमानवेगात्कूलं फलावर्जितपूगमालम् ॥[5]

इत्यत्र एते वयम् इति प्रयोगेणैव वार्ताक्रमे किमपि परिवर्तनं नूतनत्वं सूच्यते । आत्मानं प्रति सङ्केतः कविनाऽन्यत्राप्येतदो रूपेण कृतः । यथा—
एते वयममी दाराः कन्येयम् इत्यस्मिन् कुमारसम्भवीये पद्ये ।[6]

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखिशृङ्गम् ।[7]

अत्र प्रयुक्तम् एतद् इति पदमाविर्भवतः शृङ्गस्य समीपतरवर्तित्वं सुतरां सूचयति ।

---

१. विक्रमो० ४।४०.
२. तत्रैव ५।१२
३. माल० ३।१७
४. तत्रैव ५।११
५. रघु० १३।१७
६. कुमार० ६।६३
७. रघु० १३।२६

एषा त्वया पेशलमध्ययापि घटाम्बुसंवर्धितबालचूता ।[1]

इत्यत्र दृश्यमानायाः पञ्चवट्याः सङ्केतार्थं वाक्यारम्भे प्रयुक्तमेतदो रूपं समीचीनम् । स्थूलदृष्ट्या त्वेतददसोः रूपाणां प्रयोगेषु न कोऽपि भेदो लक्ष्यते किन्तु कालिदासप्रयुक्तेष्वेषु प्रयोगेषु सूक्ष्मेक्षिकया इदमन्तरं स्पष्टं भवति । अन्तरिक्षमार्गाद् विमानेनायोध्यां गच्छन् रामो यदा दूरस्थं किमपि सीतायै दर्शयति तदा स अदसो रूपं प्रयुङ्क्ते, अपरस्मिन्नेव क्षणे विमानवेगाद् यदा तद् वस्तु समीपतरं भवति तदा स एतदो रूपेण सङ्केतयति । तथाहि—

अमी तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ।।[2]

इत्यत्र सुतीक्ष्णं प्रति सङ्केताय अदसो रूपं प्रयुक्तम् । तस्यैव कृते च पुनः —

एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ।।[3]

इत्यत्रैतदो रूपं प्रयुक्तम् । एकस्यैव विषयस्यार्थे उभयरूपप्रयोगेण कविना भेदो नितरां स्पष्टीकृतः । अदसो रूपं तदा प्रयुक्तं यदा विमानः सुतीक्ष्णात् किञ्चिद् दूरमासीद्, समीपतरवर्तित्वे च विमाने सुतीक्ष्णस्यैव कृते एतदः प्रयोगः कृतः । एवञ्च—

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः ।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ।।[4]

दूराच्चित्रकूटपर्वतं दर्शयितुम् असावित्यदसो रूपं प्रयुक्तम् । यदा च विमानश्चित्रकूटपर्वतस्योपर्यायाति तदा तस्योपकण्ठे वहन्तीं मन्दाकिनीं दृष्ट्वा तदर्थमेतदो रूपं प्रयुक्तम्—

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ।।[5]

अन्यत्रापि तथैवैतदो रूपेण समीपतरवर्तित्वं सूच्यते ।

---

१. रघु० १३.३४
२. तत्रैव १३।४१
३. तत्रैव १३।४३
४. तत्रैव १३।४७
५. तत्रैव १३।४८

कुमारसम्भवे यथा—

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः।
ह्रीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥[1]

इत्यत्र गन्धमादनवने सम्मुखस्थस्य वृक्षस्य शिखरे कृतास्पदं बर्हिणं प्रति शिवेन सङ्केत 'एष' इत्येतदो रूपेणैव कृतः।

एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने! विजृम्भते ॥[2]

अत्रापि सम्मुखे प्रसरन्तमन्धतमसं प्रति एतद् इति पदेन सङ्केतः।

एतदुच्छ्वसितपीतमैन्दवं वोढुमक्षममिव प्रभारसम्।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमानिबन्धनात् ॥[3]

समीपस्थं कुमुदं प्रति एतद् इत्यनेन पदेन सङ्केतो युज्यते।

एष चारुमुखि! योग्यतारया युज्यते तरलबिम्बया शशी।[4]

प्रत्यक्षमवलोक्यमानं शशिनं प्रत्येतदो रूपेण सङ्केतः समीचीनः।

मेघदूते च पुरः स्थितं कञ्चिद् विषयविशेषं प्रत्येतदो रूपेणैव वाक्यारम्भे सङ्केतः। तथा हि—

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः[5]
एतस्मान्मां प्रियकुशलिनमभिज्ञानदानाद्विदित्वा[6]
एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे[6]

एभिर्लक्षणैः एतस्मादभिज्ञानदानाद्, एतत्प्रियम् इति सर्वत्रैतदो रूपस्य वाक्यारम्भे प्रयोगेण तत्तद्विषयस्य महत्त्वं प्रख्यापितम्।

शाकुन्तलेऽपि—

एषाऽपि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।[7]

---

१. कुमार० ८।३६
२. तत्रैव ८।५५
३. तत्रैव ८।७०
४. तत्रैव ८।७३
५. मेघ० २।२०
६. तत्रैव २।५५
७. तत्रैव ८।५८
८. शाकु० ४।१६

समीपवर्तिनीमातुरां चक्रवाकीं प्रत्यनसूयाया एतदो रूपेण सङ्केतो युज्यते ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति ॥[1]

कुसुमलताप्रियातिथिं मधुकरं प्रतिपालयन्तीं मधुकरीं प्रति नृपस्य एषा इत्येतदो रूपेण सङ्केतो युक्ततरः ।

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।[2]

स्वस्य समुपस्थितिं महत्त्वञ्च दर्शयितुमिन्द्रसारथिनाऽत्रैष इति पदं सम्प्रयुक्तम् ।

विक्रमोर्वशीयेऽपि तथा—

एताः सुतनु मुखं ते सख्यः पश्यन्ति हेमकूटगताः ।[3]

सखीजनः कुत्र खलु भवेद् इत्युर्वश्याः प्रश्ने दृग्गोचरीभूताः सखीः दर्शयतः पुरूरवसः एता इत्येतदो रूपेण सङ्केत उपपद्यते ।

एषा मनो मे प्रसभं शरीरात्
पितुः पदं मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात्
सूत्रं मृणालादिव राजहंसी ॥[4]

शरीरात् प्रसभं मनः कर्षन्तीमुर्वशीं प्रति एषा इति वाक्यारम्भे प्रयुक्तं पदं नृपस्यान्तर्वेदनामुद्भावयति ।

अत्र स्वयं निष्कर्षो यत्कविना सङ्केतपदानि सुविमृश्य वाक्यारम्भे न्यस्तानि । अत. खलु विप्रकृष्टस्य वस्तुनः सङ्केतार्थमदसो रूपं सन्निकृष्टस्य वस्तुनः कृते इदमो रूपं, समीपतरवर्तिनश्च विषयस्यार्थमेतदो रूपं यथास्थानं प्रयुक्तम् ।

---

१. शाकु० ६।१६
२. तत्रैव ६।२६
३. विक्रमो० १।१२
४. तत्रैव १।२०

# षष्ठः परिच्छेदः

## कालिदासस्य शब्दप्रयोगेऽसामान्यत्वम्

शब्दवित्कविः कालिदासो न कदापि शब्दप्रयोगे परतन्त्रः। तथाऽसौ शब्दान् प्रयुङ्क्ते यथा विच्छित्तिविशेषः कश्चन समुन्मिषति। स्वानुकूलार्थशब्दप्रयोगेणेष्ट-प्रभावोत्पादनेऽस्य कवेर्वैशिष्ट्यं दृश्यते। क्वचित्त्वसौ शब्दप्रयोगे नितान्तम-सामान्यत्वं प्रदर्शयति। नैके तादृशाः शब्दास्तस्य कृतिषु प्रयुक्ता ये खलु रूढार्थं-मपहाय यौगिकार्थे प्रयुक्ता रूढिर्योगापहारिणीति न्यायमनादृत्य। एवमेवाप्रच-लितेष्वर्थेष्वपि प्रयुक्ताः केचित् शब्दाः कविना। क्वचिच्च शब्दसंस्कारोऽपि नापेक्षितस्तेन स चाऽपि नाहेतुकः। तत्र गूढः कश्चनाभिप्रायः कवेरिति नो मतम्। एतत्सर्वं परिच्छेदेऽस्मिन् सोदाहरणं प्रतिपाद्यते।

### (क) रूढार्थप्रचलितशब्दानां यौगिकार्थे प्रयोगः

**अत्यन्तम्**

प्राप्यातमस्यं गुरुमापि दुःखमत्यन्तलुप्तप्रियदर्शनेन ॥[1]

अत्यधिकमित्यत्यन्तपदस्य रूढार्थः। अतिक्रान्तोऽन्तमिति च यौगिकार्थः। कविनाऽस्मिन्नेवार्थेऽत्यन्तपदमत्र प्रयुक्तम्। अत्यन्तं सततं निरन्तरं वा लुप्तं प्रियदर्शनं यस्य तेन सप्येतरेणाऽऽर्णेत्यर्थः। रूढार्थविवक्षया यौगिकार्थ एवात्रोपप-द्यते। प्रियदर्शनमत्यधिकं न किन्तु न शाश्वतकालाय लुप्तमिति भावः।

एवञ्च—

किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन्।[2]

इत्यत्रापि अत्यन्तवियोगमोघ इत्यस्यात्यन्तेन पुनः प्राप्तिरहितेन सततेन वियोगेन मोघ इत्यर्थो न त्वत्यन्तेनात्यधिकेनेति।

अपि च—

अत्यन्तमेव सदृशेक्षणवल्लभाभिराहो निवर्तयति समं हरिरङ्गनाभिः ॥[3]

---

१. रघु० १४।४६

२. तत्रैव १४।६५

३. तत्रैव १।२५

इति दुष्यन्तोक्तावप्यत्यन्तमित्यस्य सततं नित्यमित्येवार्थः हरिणाङ्गनाभिर्मृगीभिः सहात्यन्तमाजन्मैव निवत्स्यति इत्यर्थद्योतनिकायां राघवभट्टपादाः। अत्यन्तमेव यावज्जीवमेवेति कुमारसन्तोषिण्यां रमेन्द्रमोहनवसुमहाभागाः।

नम्रः

भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि बाष्पबिन्दवः ॥[1]

नम् धातो, 'नमिकम्पि—इति रप्रत्यये निष्पन्नो नम्रशब्दो विनयान्वितार्थे रूढः। किन्तु कालिदासः शब्दमिममनेकशो नत' प्रणतो वेति यौगिकार्थे प्रयुङ्क्ते। प्रकृते प्रसङ्गेऽपि नम्रयोरुपरि इति कथने नम्रपदं यौगिकार्थे विद्यते, नम्रयोः प्रणतयोरित्यर्थः।

निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः॥[2]

इत्यत्रापि नम्रेति शब्दो यौगिकार्थ एव विद्यते। देवि! भर्तृनिदेशरौक्ष्यं क्षमस्वेति लक्ष्मणो नम्रः प्रणतो बभूवेत्यर्थः। एवमन्यत्रापि यथा—

अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा।[3]

नम्रा प्रणता उमा ताभिः सतीभिः पत्युः शिवस्य अखण्डितमक्षतं प्रेम लभस्व प्राप्नुहि इत्युच्यते स्म अभिहिता इति मल्लिनाथपादाः।

श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्याम्।[4]

स्तोकनम्रा ईषन्नतेत्यर्थः।

भवन्ति नम्रास्तरवः फलागमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः।[5]

तरवः फलागमैर्नम्रा नता भवन्तीत्यर्थः। साभिप्रायमिवात्र नम्रेतिपदं प्रयुक्तम्। स्वभाव एवैष परोपकारिणाम् इत्यस्यार्थान्तरन्यासे फलागमैस्तरूणां नम्रत्व विनयान्वितार्थत्वमपि ध्वन्यते।

प्रवीणः

विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः।[6]

१. रघु० ११।४
२. तत्रैव १४।५८
३. कुमार० ७।२८
४. मेघ० २।२२
५. शाकु० ५।१२
६. कुमार० ७।४८

प्रकृष्टा संसाधिता वीणाऽस्य। यद्वा प्रवीणयति वीणया प्रगायतीति प्रवीणपदस्य यौगिकार्थः। अस्मिन्नेवार्थे पदमिदमत्र निहितं विद्यते। प्रवीणैः वीणावादने निपुणैर्विश्वावसुप्रमुखैर्गन्धर्वैः संगीयमानत्रिपुरावदान इत्यर्थः। प्रवीणेति पदं लोके च वीणया गायकस्य नैपुण्यप्रसिद्धेस्तत्तुल्यनैपुण्यात् तथात्वे नैपुण्यार्थे रूढं दृश्यते किन्तु कवेरत्र यौगिकार्थ एवाभीष्टः, स च नितान्तमुपपन्नो गन्धर्वाणां वीणावादने प्रकृष्टत्वात्।

सहायः

> आकैलाशाद्बिसकिसलयच्छेदपाथेयवन्तः।
> सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः॥[1]

सह अयते गच्छतीति सहाय इत्यस्मिन् यौगिकार्थे सहायेति शब्दः प्रकृते प्रसङ्गे प्रयुक्तः। राजहंसा आकैलाशान्नभसि भवतः सहायाः सहयायिनः सम्पत्स्यन्त इत्यर्थः। शब्दस्त्वयमनुकूलार्थेऽनुचरार्थे सहायकार्थे वा रूढः। कविरसावप्यन्यत्र रूढार्थे शब्दमिमं प्रयुङ्क्ते यथा—

> मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव।[2]

इत्यस्मिन् प्रसङ्गे तु सहाय इत्यस्य सहकारी वेत्यर्थो न तु सहचरः सहयायी वेति साहचर्यादिति कथनानन्तरं सहायः सहचर इति कथने पुनरुक्तिदोषप्रसङ्गात्। राजहंसाः सहायाः सम्पत्स्यन्त इत्यत्र तु सहयायिन इति यौगिकार्थ एव कविसम्मतः।

## (ख) शब्दानामसामान्यार्थे प्रयोगः

असामान्येषु केषुचिन्नूतनेष्वेवार्थेषु शब्दान् कविवरोऽयं काव्येषु प्रयुञ्जानो दृश्यते। यथा हि—

अन्वतिष्ठत्

> यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च।
> प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत्॥[3]

इत्यत्र अन्वतिष्ठदिति क्रियापदमसामान्ये प्रदानार्थे प्रयुक्तम्। प्रजापतिः

---

१. मेघ० १।११
२. कुमार० ३।२१
३. तत्रैव १।१७

स्वयमेव कल्पितयज्ञभागं शैलाधिपत्यमन्वतिष्ठत् ददाति स्मेत्यर्थः। अनुपूर्वोऽस्य स्थाधातुः प्रायेण कर्मकरणे कर्मसम्पादने वा प्रयुज्यते। कविः स्वयमेव प्रयुङ्क्ते बहुशो यथा—

विवाहदीक्षाविधिमन्वतिष्ठत्।[1] इति कौमारे।
आज्ञापयतु आर्य. को नियोगोऽनुष्ठीयताम्।[2] इति।
किमनुतिष्ठति भगवान्मारीचः।[3] इति च शाकुन्तले।
तात ! गुरोर्वचनमनुतिष्ठ[4] इति विक्रमोर्वशीये।
सखि ! अनुतिष्ठात्मनो नियोगम्[5] इति मालविकाग्निमित्रे च।

एवं सर्वत्र सम्पादनार्थे क्रियापदमिदं प्रयुक्तम्। शैलाधिपत्यं स्वयमन्वतिष्ठत् इत्यत्र तु प्रदानार्थ एव कवेरभीष्टः। नूतने त्वर्थे क्रियापदमिदं कविनात्र प्रायोजि।

**उदितम्**

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः।[6]

त्रिलोकसौन्दर्यमिवोदितमेकत्र समाहृतं समुदितमित्यभिनवार्थे उदितपदमत्र विद्यते। अन्यत्र तु उदिते उद्गते वृद्धे वा उदुपसृष्टाद् इण्. क्ते अथवा वदेः क्ते निष्पन्नमुदितपदं च कथिते भवति। असामान्यार्थे तथा प्रकृतेऽस्मिन् प्रसङ्गे पदमिदं निहितम्।

**उन्मुखी**

तया व्याहृतसंदेशा सा बभौ निभृता प्रिये।
चूतयष्टिरिवाभ्याशे मधौ परभृतोन्मुखी॥[7]

उन्मुखी इतिपदमत्र प्रचलितार्थं परित्यज्याभिनवे मुखरार्थे प्रयुक्तम्। पर-

---

१. कुमार० ७।१
२. शाकु० १।१।३
३. तत्रैव ७।१२।२
४. विक्रमो० ५।१२।३
५. माल० १।३।३
६. कुमार० ५।४१
७. तत्रैव ६।२

भूतया उन्मुखी मुखरा इत्यर्थः । अन्यथास्य पदस्य प्रयोग उद्गतमूर्ध्वं मुखमस्या इति विग्रहादूर्ध्वास्ये उद्युक्ते वाऽर्थे लभ्यते यथा—

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ।
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्यचैवम् ।[१]

इत्यत्र उन्मुखी ऊर्ध्वास्या इत्येवार्थः ।

गन्धः

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।[२] इति ।
केनात्तगन्धो माणवक[३] इत्युभयत्र गन्धेतिशब्दः गर्वे प्रयुक्तः ।

सामान्यतस्तु शब्दोऽयमामोदे विद्यते । यथा—

जम्ब्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः ।[४]

अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥[५]

इत्यादिषु ।

अथवा गन्धशब्दः सम्बन्धे दृश्यते यथा—

वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।[६]

इत्यत्र मल्लिनाथपादैः सगर्वः सम्बन्धी चेत्युभयथान्वयो दत्तः ।

सर्वः सगन्धेषु विश्वसिति[७] इत्यत्र सगन्धेषु सम्बन्धिष्वित्यर्थः ।

कालान्तरे च शब्दोऽयं कोशकारैः गर्वेऽपि स्वीकृतः । यथा—

आत्तगन्धोऽभिभूतः स्यात् इत्यमरः ।[८]
गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः इति विश्वः ।[९]

१. मेघ० २।४२
२. रघु० १३।७
३. शाकु० ६।२५।३
४. मेघ० १।२२
५. शाकु० ४।८
६. मेघ० १।१०
७. शाकु० ५।२१।२
८. अमर० ३।१।४०
९. विश्व० ८२।८

गन्धः गर्वः सत्वोऽपि च इति त्रिकाण्डशेषः ।[1]

नेत्रम्

धिस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥[2]

नेत्रक्रमेणांशुकपरिपाट्या सूर्यमुपरुरोधाच्छादयामास इत्यर्थः । नेत्रपदमत्रांशुकार्थे प्रयुक्तम् । सर्वथाभिनवोऽस्य प्रयोगः । कोशकारैश्चास्मादेव प्रसङ्गान्नेत्रपदमंशुकार्थे गृहीतं स्यात् ।

स्याज्जटांशुकयोर्नेत्रम् इत्यमरः ।[3]
नेत्रं मथिगुणे वस्त्रे तरुमूले विलोचने ।
नेत्रे रथे च नाड्यां च नेत्रो नेतरि मेघवत् ॥[4] इति विश्वः ।
नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च ।
रथे चक्षुषि नद्यां च नेत्री नाड्यां च योषिति ॥[5] इति मेदिनी ।

नेती इति भाषायामपि वस्त्रार्थ एव नेत्रशब्दप्रयोगोऽत्र कालिदासोपज्ञत्वं व्याहन्ति । अन्यत्राप्यस्य पदस्यांशुकार्थे प्रयोगो नातिदुर्लभः ।

न्यायः

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।[6]

*त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैरित्यर्थः* । शब्दार्णवपतिनाऽमुना कविनैव न्यायेतिपदं स्वरार्थे सर्वप्रथमं प्रयुक्तमिति शब्दविदो विदन्ति । नीयन्त एभिरर्थविशेषा इति न्यायाः स्वरा इति मल्लिनाथपादाः ।

आप्टेमहाभागास्त्वत्र न्यायपदस्य पद्धतीत्यर्थं गृह्णन्ति ।[7] किन्तूदीरणमित्यनेन सह सङ्गतिस्तु स्वरार्थ एव वर्तते । मल्लिनाथपादानां टीका चात्र युक्तैव ।

---

१. त्रिकाण्ड० ३।३।२१०
२. रघु० ७।३९
३. अमर० ३।३।१८०
४. विश्व० १२८।४३
५. मेदिनी० १२६।२४
६. कुमार० २।१२
७. आप्टेकोशः पृ० ९४३

**प्रजावती**

> प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।[1]
> तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।[2]

इत्युभयत्र प्रजावतीपदं भ्रातृजायार्थे सर्वप्रथमं कविरसौ प्रायुङ्क्त । कोश-कारैश्चेदं पदमस्मिन्नेवार्थे प्रयुक्तम् ।

> प्रजावती भ्रातृजाया इत्यमरः ।[3]
> प्रजावती भ्रातृवधूः स्मृता च इति हलायुधः ।[4]

प्रजावती सन्तानवतीति सामान्यार्थः ।

**प्रतियातना**

> स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।[5]

इत्यत्र प्रयुक्तः प्रतियातनाशब्दः सामान्ये प्रतिमेत्यर्थे विद्यते । कोशकारैः काव्यकारैश्चास्मिन्नर्थे स्वीकृतमपि । यथा—

> प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ।
> प्रतिकृतिरर्चा पुंसि प्रतिनिधिः ।[6] इत्यमरः ।
> भर्तिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव इति माघः ।[7]

प्रत्युपसृष्टाद् यतेर्ण्यिचि युचि प्रतियातनमित्यस्य सामान्येन तुल्यरूपयातन-मित्यर्थः ।

**प्रसिद्धः**

> तस्मादधः किञ्चिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम् ।
> सालक्तकौ भूपतयः प्रसिद्धैर्ववन्दिरे मौलिभिरस्य पादौ ।।[8]

---

१. रघु० १४।४५
२. तत्रैव १५।१३
३. अमर० २।६।३०
४. हलायुध० ५०४
५. रघु० १६।१७
६. अमर० २।१०।३५
७. शिशु० ३।३४
८. रघु० १८।४१

प्रसिद्धशब्दो भूषिते ख्याते चार्थे प्रसिद्धः किन्तु कविरसौ शब्दमिममत्रो-न्नतार्थे विदधाति । भूपतयः प्रसिद्धैरुन्नतैर्मौलिभिर्मुकुटैर्ववन्दिरे प्रणेमुरिति मल्लिनाथपादाः । अलङ्कृतैरिति हेमाद्रिपादाः । मल्लिनाथपादानां मतमत्र समीचीनं प्रतीयते । भूषितार्थे च पदमिदमन्यत्र प्रयुङ्क्ते कविर्यथा—

> यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।[1]
> तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ।[2]

इत्युभयत्र 'प्रसिद्धे ख्यातभूषितौ'[3] इत्यमरोक्त्या भूषितार्थे प्रसिद्धेतिपदं प्रयुक्तम् ।

किन्तु मल्लिनाथपादानां प्रसिद्धशब्दस्य उन्नतार्थग्रहणे विप्रतिपत्तिरिय-मापतति यदयमर्थो नैकेनापि कोशकारेण कृतो नैवैकेनापि परवर्तिना काव्य-कारेण उपात्तः । अपि च कालिदासेनान्यत्र भूषितार्थे ख्यातार्थे चैव प्रयुक्तः स्यात् । शब्दोऽयमस्मिन्प्रकृते स्थलेऽपि जातु भूषितार्थ एव प्रयुक्तः स्यादिति विचारणीयम् ।

**धारा**

अये दक्षिणेन वनधारां प्रियाचरणनिक्षेपशंसी नूपुररवः श्रूयते यावदेनमनु-गच्छामि ।[4]

धाराशब्दः सामान्येन जलसम्पात एव प्रयुज्यते । अन्येऽपि प्रचलिता बहवो-ऽर्था कोशकारैर्निर्दिष्टाः । यथा—

> धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके ।
> घटादिच्छिद्रसन्तत्योः प्रपाते स्याद्द्रवस्य च ।।[5] इति मेदिन्याम् ।
> धारोत्कर्षे खड्गधाग्रे सैन्याग्रे वाजिनां गतौ ।
> जलादिपाते सन्तत्याम्[6] इत्यनेकार्थसङ्ग्रहे ।

---

१. कुमार० ५।९
२. तत्रैव ७।१६
३. अमर० ३।३।१०४
४. विक्रमो० ४।२७।२
५. मेदिनी० २७।५०
६. अनेकार्थ० २।४३५

किन्तु नितान्तमसामान्यार्थकमेव कविर्वनधारापदं प्रयुङ्क्ते। वनधारां वृक्षपङ्क्तिरित्यर्थः। एवं वनधारापदस्य वृक्षपङ्क्तिरित्यर्थो नव एव। आप्टे-महाभागाश्चेममर्थं स्वकीये कोशे स्वीकुर्वन्ति[1]। एवं च मोनियरविलियमगहाभागा[2] अपि।

विवादः

तस्याननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानाम्॥[3]

इत्यत्र विवादेतिपदमपूर्वप्रयुक्ते आदेशार्थे कविना प्रयुक्तम्। अन्यत्र चास्य प्रयोगो विचारे तर्के व्यवहारे कलहे वा विद्यते यथा—

असमर्थमावेऽपि कपोश्चिदासीदेकाप्सरः प्रार्थितयोर्विवादः।[4]

इत्यत्र कलहे विवादपदं विद्यते।

एष विवाद एव प्रत्याययति।[5]

इत्यत्र विवादपदं प्रतिवादार्थम्।

तेन हि प्रस्तूयतां विवादः।[6]

इत्यत्र च शास्त्रार्थे प्रतियोगितार्थे वा विवादेति शब्दः प्रयुक्तः।

विशेषः

पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि॥[7]

विशेषपदमत्रासामान्येऽवयवार्थे निहितम्। केवलेऽस्मिन्प्रसङ्गे कवि-रसावयवार्थकमिदं पदं प्रयुङ्क्ते। आप्टेमहाभागैश्च गृहीतोऽयमर्थः।[8] अनेकार्थसंग्रहेऽप्यस्मिन्नर्थे पदमिदं लभ्यते विशेषस्तु व्यक्तावयवेऽपि च। आधिक्ये

१. आप्टेकोश पृ० १३८६
२. मो० वि० को० पृ० ९१७
३. रघु० १८।४३
४. तत्रैव ७।५३
५. शाकु० ७।२०।३
६. माल० १।१५।१
७. कुमार० १।२५
८. आप्टेकोश पृ० १४७२

चाथ शुश्रूषोपासनाश्रवणे द्वयोः[१] इति । अन्येष्वर्थेषु तु कविरिदं पदं बहुधः प्रयुङ्क्ते ।

किन्त्वङ्गार्थेऽवयवार्थे प्रयोगस्तु कवेर्विशेषः ।

मुख्यार्थं विहाय भावसादृश्यादन्यार्थे शब्दान् प्रयुङ्क्ते कविरयम् । यथा—

आलोकः

उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥[२]

आलोकशब्दस्य मुख्यार्थस्त्वस्ति दर्शनमिति । किन्तु नृपं दृष्ट्वा वैतालिकादिभिर्जयेत्युच्चारणमप्यालोक इत्यस्माकं कवेर्मतं तेनैवास्मिन्प्रकृते पद्ये कविरालोकेति पदं जयशब्दार्थे प्रयुङ्क्ते ।

आलोकस्य शब्दं वाचकमालोकयेति शब्दं जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्याद्' इति विश्वः इति मल्लिनाथपादा अपि स्वकीयायां टीकायां प्रदर्दति ।

यथावुदीरितालोकः सुधर्मानवमां सभाम् ॥[३]

इत्यत्रापि जयशब्दार्थे प्रयुक्तमिदमालोकःपदम् । उदीरितालोक उच्चारितजयशब्द इत्यर्थः । अन्यत्र तु दर्शने प्रकाशे वा शब्दोऽयं प्रयुक्तः कविना यथा—

प्रसवेनाभिवर्षन्तो वत्सालोकप्रवर्तिना ॥[४]
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ।[५]
यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलताम् ।[६]

इत्यादिषु दर्शने ।

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।[७]

---

१. अनेकार्थ० ३।७८५
२. रघु० २।६
३. तत्रैव १७।२७
४. तत्रैव १।८४
५. मेघ० १।३
६. शाकु० १।९
७. रघु० ७।६

इत्यत्र प्रकारो लक्षणया गवाक्षे पदमिदं न्यधायि । शहरालोकमार्गं गवाक्षपथं प्रजग्मुः इति मल्लिनाथपादाः ।

उपरागः

विभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥[१]

मृणालिनी हैमं हिमकृतमुपरागमुपद्रवमिवानिर्वृतानां दुःखितानामाकारं विभर्षि चेति मल्लिनाथपादाः । उपरागशब्दोऽयमत्रोपद्रवार्थे प्रयुक्तः । शब्दश्चायं सूर्याचन्द्रमसोर्ग्रहणार्थे रूढो यथा कविनान्यत्र प्रयुक्तः—

उपरागान्ते शशिनः समुपगता रोहिणी योगम् ।[२]

किन्तु राहुणा शशिनः केतुना सूर्यस्य चोपरागे कोऽप्युपद्रवो यथा कार्यते तस्मादस्मिन्प्रकृते पद्ये कविना भावसादृश्यादुपरागशब्द उपद्रवार्थे प्रयुक्तः । कवेरस्माकमिदमेव शब्दप्रयोगेऽसामान्यत्वम् ।

परागः

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।
ययौ पश्चाद्रथादीति चतुस्स्कन्धेव सा चमूः ॥[३]

इत्यत्र परागपदमसामान्ये धूल्यर्थे प्रयुक्तम् । सामान्येन त्विदं पदं पुष्परजस्येवोच्यते । परमस्माकं कवेरनेनासामान्यासाधारणधूल्यर्थप्रयोगेण कोशकारैरपि पदस्यास्य तादृगर्थो गृहीतो यथा—

परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥[४] इत्यमरे ।
परागः सुमनोरेणौ धूलिस्नानीययोरपि ।[५] इति मेदिन्याम् ।
धूले रजस्यपि परागः ।[६] इति हलायुधे ।

बर्हः

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।[७]

---

१. रघु० १६।७
२. शाकु० ७।२२
३. रघु० ४।३०
४. अमर० ३।३।२१
५. मेदिनी० २४।४०
६. हलायुधः ८०६
७. रघु० ६।१७

बर्हशब्दः पिच्छे विशेषतो मयूरपिच्छे एव प्रसिद्धः। कविनापि बहुशोऽस्मिन्नेवार्थे प्रयुक्तः। यथा—

प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम्॥[1]
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः॥[2]
ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी।[3]

इत्यादिषु। किन्तु कोमलत्वसादृश्यात् कुसुमकिसलये बर्हशब्दस्य प्रयोगः कवेरसामान्यत्वसूचकः। केतकबर्हं केतकदलम् इति मल्लिनाथपादाः। अमरादिकोशकारैरपि तदर्थकोऽयं शब्दो गृहीतः यथा—

दलेऽपि बर्हम्[4] इत्यमरः।
बर्हं पिच्छे दलेऽस्त्रियाम्[5] इति मेदिनी।

सुभगः

निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।[6]

सुभगशब्दोऽत्र योग्यार्थे प्रयुक्तः चरणोपरागसुभगः चरणोपरागयोग्य इत्यर्थः। सम्भवतः सुभगशब्दस्य शोभनार्थत्वात् प्रियार्थत्वाद्वा प्रियं वस्तु योग्यं भवतीति भावादत्र सुभगेत्यर्थः कवेरभीष्टं स्यात्।

अवतारः

अवोपसृष्टात् तृधातोर्घञि अवतारेतिपदं देवादीनामवतारे रूढं यथा—

विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे[7] इति भागवते।
धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक्[8] इति रघुवंशे।

---

१. रघु० १६।१४
२. कुमार० १।१५
३. मेघ० १।४८
४. अमर० ३।३।२३६
५. मेदिनी० १७५।६
६. शाकु० ४।५
७. भागवत० २।६५
८. रघु० १०।८४

किन्तु कविरसौ कस्यापि वस्तुनोऽवतरणे उत्पत्त्यामपि पदमिदं निधत्ते यथा—

अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥[१]

कमलाच्चिरोत्पन्नात्। नवावतारमचिरोत्पन्नमुत्पलमिवेत्यर्थः अवतारपदमत्रोत्पन्नेत्यर्थकम्। एवमन्यत्रापि—

गतो भवान्यात्सरमित्ययं मे मा भूत्परीवादनवावतारः ॥[२]

परीवादस्य नवो नूतनः प्रथमोऽवतार आविर्भावो मे मा भूदित्यत्रावतारशब्द आविर्भावार्थे प्रयुक्तः। एवञ्च—

ततो वसन्तावतारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य।[३]
प्रेक्षतां भवान्वसन्तावतारसूचकमभिरामत्वं प्रमदवनस्य।[४]
यत्रैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान्।[५]

इति सर्वत्र ऋतूद्भवे पदमिदं निहितम्।

अवधिः

अवधिशब्दः कालसीम्नि प्रसिद्धः परमस्माकं कविः कालेऽपि शब्दमिममेकस्मिन्प्रसङ्गे प्रयुङ्क्ते यथा—

सम्बध्नता कामिजनेषु दोषाः सर्वे निदाघावधिना प्रमृष्टाः ॥[६]

निदाघावधिना ग्रीष्मकालेन। अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च इति विश्वः। इति मल्लिनाथपादाः।

समाधिः

प्रणिधाने चित्तैकाग्रतायां ब्रह्मणि मनःस्थिरीकरणे वा प्रसिद्धमिदं पदं

१. रघु० ३।३६
२. तत्रैव ५।२४
३. शाकु० १।२३।२४
४. विक्रमो० २।६।७
५. माल० ३।२।३
६. रघु० १६।५२

कविना केवले नियमार्थेऽपि प्रयुक्तं तच्चासामान्यमेव यथा—

सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।[१]

समाधिमत्यां नियमवत्यां तस्याम् इति मल्लिनाथपादाः ।

ब्रह्मणि मनोनिधानार्थं तपश्चर्याया वा चित्तैकाग्र्याय नियमविशेषाचरणाद्धेतोः सामान्यनियमाचरणेऽपि समाधिपदस्यात्र प्रयोगः कवेः शब्दप्रयोगेऽसामान्यत्व प्रकटयति । तपश्चर्यादीना नियमार्थे तु शब्दोऽयं बहुशः प्रयुक्तो यथा—

अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥[२]
यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।[३]

सारथिः

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।[४]

इत्यत्र सारथिपदं सहायकार्थे प्रयुक्तं न तु सूतार्थे । सारथिना सहायभूतेनेति मल्लिनाथपादाः । सारथिः सञ्चालनात् स्वामिनः सहायको भवति तस्मादेवात्र भावसादृश्यात् सहायार्थे सारथिपदोपपत्तिः । नूनमसामान्य एवायं प्रयोगः । आप्टेमहाभागैर्गृहीतोऽयमर्थः स्वकीये कोशे । इदमेव चोद्धरणमस्मिन् प्रसङ्गे तैर्दत्तम् ।[५] अमरविश्वमेदिनीप्रभृतिषु संस्कृतकोशेषु नायमर्थो लभ्यते ।

द्रविणः

अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।[६]

इत्यत्र द्रविणशब्दः पराक्रमे कविना प्रायोजि । शब्दोऽयं अहीनबाहुद्रविणः समग्रभुजपराक्रम इत्यर्थः । औपचारिकोऽयं प्रयोगः । द्रविणं नाम सुवर्णं भवति । तच्चोत्कृष्टं किमपि वस्तु । बाह्वोरप्युत्कृष्टत्व भवति । किन्त्व तदुत्कृष्टत्वं पराक्रम एवेतीदं द्रविणपद पराक्रमार्थे सङ्गतम् । शब्दोऽयं प्रायेण धनार्थे प्रयुज्यते किन्तु कोशकारैर्बले पराक्रमे चापि गृहीतो यथा—

---

१. कुमार० १।२२
२. तत्रैव ५।६
३. तत्रैव ५।१८
४. रघु० ३।३७
५. आप्टेकोश पृ० ८४३
६. रघु० १८।१४

द्रविणं तु बलं धनम्[1] इत्यमरः।

द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे[2] इति मेदिनी।

द्रविणं काञ्चने धने पराक्रमे बलेऽपि स्यात्[3] इति हेमचन्द्रः।

काञ्चनेऽप्यस्य प्रयोगं विदधाति कविर्यथा—

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः।[4]

द्रविणाना हिरण्यानाम्। हिरण्यं द्रविणं द्युम्नम् इत्यमरः। राशय एवोपदा उपायनानि इति मल्लिनाथपादाः।

ध्वान्तम्

अध्वानमध्वानविकारलङ्घ्यस्ततार ताराधिपखण्डधारी॥[5]

ध्वान्तपदं सामान्येनान्धकारवाचकमस्ति यथा—

अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः।[6] इत्यमरः।

किन्तु तमसः पर्यायत्वात् तमोगुणे ध्वान्तपदमत्र निहितम्। अध्वान्तविकारलङ्घ्यः न ध्वान्तविकारेण तमोगुणविकारेण रागादिना लङ्घ्य इत्यर्थः। नितान्तमसामान्यार्थकोऽयं ध्वान्तशब्दः कविनात्र प्रयुक्तः। अध्वानमध्वान्तेति संयोजनसङ्गतिरप्यत्र कवेरभीप्टा लक्ष्यते।

कुलिशम्

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम्।[7]

इत्यत्र शतकोटिवाचिना कुलिशशब्देन कोटिमात्रमस्मिन्प्रसङ्गे गृहीतं कविना।

---

१. अमर० ३।३।५२
२. मेदिनी० ४८।५१
३. अनेकार्थ० ३।२१६-२१७
४. रघु० ४।७०
५. कुमार० ७।४८
६. अमर० १।८।३
७. मेघ० १।६५

इदञ्चात्र कवेरसामान्यत्वम् । शतकोटिशब्दः कुलिशपर्यायत्वेन कोशे विद्यते यथा—

ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।।[१] इत्यमरः ।

दुर्दिनम्

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।[२]

इत्यत्र दुर्दिनमिति पदं मेघाच्छन्नदिने रूढमपि लक्षणया वर्षण धारासम्पात इत्यर्थे प्रयुक्तम् । नाराचदुर्दिनं विषह्य नाराचानां बाणानां दुर्दिन धारासम्पातं वा विषह्येत्यर्थः ।

अलकः

समनुकम्प्य सपत्नपरिग्रहानमलकानलकानवमां पुरीम् ।।[3]
अलकपदं चूर्णकुन्तले रूढं यथा कोशेऽपि अलकाश्चूर्णकुन्तला इत्यमरः ।[४]

परमलति भूषयतीत्यलक इति व्युत्पत्तिलभ्यार्थात्पदमिदं लक्षणया केश-संस्कारे प्रकृते श्लोके निहितं प्रतीयते । अनलकान्हृतभर्तृकतयाऽलकसंस्कार-शून्यानिति मल्लिनाथपादाः । अनलकानलकानवमामित्यत्र सयोजनसङ्गतिर्यम-कालङ्कारसङ्गतिरेवैवमसामान्यार्थग्रहणे कारणं लक्ष्यते ।

करणम्

उपमानममूद्विलासिनां करणं यत्तव कान्तिमत्तया ।[५]

इत्यत्र गात्रार्थे प्रयुक्तः करणशब्दः यद्यपि कोशेषु तदर्थकोऽपि लभ्यते यथा—

करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि[६] इत्यमरः ।

---

१. अमर० १।१।४७
२. रघु० ४।४१
३. तत्रैव ९।१४
४. अमर० २।६।९६
५. कुमार० ४।५
६. अमर० ३।३।५४

तथापीन्द्रियार्थ एवास्य प्रसिद्धो यथा कविरन्यत्र प्रयुङ्क्ते—

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।[1]

सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।[2]

इत्यादिषु । किन्त्विन्द्रियाणां शरीरस्थत्वात् करणशब्दोऽपि लक्षणया शरीरार्थे प्रयुक्तः । अन्यत्रापि देहार्थप्रयोगो यथा—

यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः ।[3]

इत्यत्र करणविगमादूर्ध्वं देहत्यागानन्तरमित्यर्थः ।

शरीरम्

यथा करणशब्दो लक्षणया शरीरार्थे प्रयुक्तस्तथैव शरीरशब्दो लक्षणया इन्द्रियार्थेऽपि कविना निहितो यथा—

अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ।[4]

इत्यत्र अन्तःशरीरेष्वन्तःकरणेषु शरीरशब्देनेन्द्रियं लक्ष्यत इति मल्लिनाथपादाः ।

## (ग) इष्टप्रभावोत्पादनार्थं व्याकरणप्रतिबद्धतायाः परित्यागः

इष्टप्रभावोत्पादनार्थं क्वचित्कविर्व्याकरणप्रतिबद्धतामपि नापेक्षते । काव्यालङ्कारिकास्त्वेनं च्युतसंस्कृतिदोषमाकलयन्ति । महामहोपाध्याया वासुदेवविष्णुमिराशीमहाभागाः स्वकीये कालिदासे[5]ति नाम्नि ग्रन्थे च्युतसंस्कृतिदोषप्रसङ्गे कानिचिदेतादृशान्युदाहरणानि निर्दिशन्ति येषु महाकविरयं व्याकरणनियमानुल्लङ्घ्य स्वतन्त्रप्रयोगं कुर्वाणो लक्ष्यते । आलङ्कारिकाणां वैयाकरणानां वा मते तत्र च्युतसंस्कृतिदोषो व्याकरणदोषो वा प्रसज्येत परं काव्यपीयूषपायिनां सहृदयानां काव्यरसिकानां कृते न तत्र कोऽपि दोषः । ते तु काव्यप्रवाहिताः काव्यरसनिर्झरिण्यां निमज्ज्योन्मज्जन्तः परमाह्लादह्लादिता इवात्मानमनुभवन्ति । काव्यरसिकहृदयेन तावत्ते दोषा निराकरणमर्हन्ति यथा—

१. रघु० ८।३८
२. मेघ० १।५
३. तत्रैव १।५५
४. रघु० ६।३६
५. कालिदास—वा० वि० मिराशी, पृ० २५१

निर्भिद्यविग्रहमशोणितलिप्तपुङ्खस्तं पातयां प्रथममास पपात पश्चात् ।[१]

इत्यत्र कृञ्चानुप्रयुज्यते लिटि इति विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चानुग्रहणम्[२] इति भाष्यकारवचनात् पातयामास इत्यस्य पातया प्रथममास इति व्यवहितप्रयोगोऽपाणिनीयः । किन्तु प्रसङ्गानुकूलप्रभावोत्पादने तथा प्रयोगो नितान्तमौचित्यमावहति । पत्री शरः कीदृशः अशोणितलिप्तपुङ्खः स महिषविग्रहं निर्भिद्य तं पातया प्रथममास पश्चात् स्वयं पपात । पातया प्रथममास इति कथनेन महिषपातने उपक्रमविशेष इवात्र सूच्यते ।

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।[३]

भ्रूभेदमात्रेण मघोनः पदात् यो नहुषं प्रभ्रंशयाञ्चकार इत्यस्य स्थाने प्रभ्रंशयां यो नहुषं चकार इति प्रयोगेण निःसंशयमधिकः प्रभ्रंशने महर्षेरगस्त्यस्य प्रभावः सूच्यते ।

संयोजयां विधिवदास समेतबन्धुः कन्यामयेन कुमुदः कुलभूषणेन ।[४]

इत्यत्रापि संयोजयां विधिवदास इति प्रयोगः संयोजनकार्ये विधिवत्त्वं प्रभावयितुं कृतः । एवञ्च—

सैवाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ।[५]
तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेन पुत्री ।[६]

इत्यादिषु प्रसङ्गेषु अस् धातोर्लिटि तादृक् प्रयोगोऽपि अस्ते भूः इति पाणिनिसूत्रविरुद्धस्तथापि कविना काव्यरसप्रवाहे तादृशाः प्रयोगाः कृताः । नानेनैव विभाव्य यत्कविरसौ व्याकरणनियमेष्वसावधानः । संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च[७] इति वचसा स स्वयं व्याकरणनियमान् प्रति जागरूको लक्ष्यते । किन्त्विष्टप्रभावोत्पादनार्थं काव्यप्रवाहे विहितोऽपि तादृग् दोषस्तस्य गुणसन्निपाते निमज्जति ।

---

१. रघु० ६।६१
२. महाभाष्यम् ३ अ० १ पा० ३ आ० ४० सू०
३. रघु० १३।३६
४. तत्रैव १६।८६
५. कुमार० १।३५
६. रघु० १४।२३
७. कुमार० १।२८

# उपसंहारः

कालिदासकाव्ये शब्दपरिपाक इति परिच्छेदपञ्चात्मकोऽयं प्रबन्धः समाप्तिं गतः। किं तावदत्र प्रतिपादितं कश्च पुनरुपलब्धय इति प्रश्ने प्रथमं त्विदमेव वक्तव्यमस्ति यद्विद्वद्भिर्यद्यावधि कालिदासस्य शब्दविन्याससौन्दर्यविषये संक्षेपेणैव यत्र तत्र निर्देशः कृतः किन्तु वामनोद्धृतशब्दपरिपाकपरिभाषया कालिदासीयशब्दानां तथाविधविश्लेषणस्यायं प्रथमो नूतनश्च प्रयासः। वामनोद्धृतशब्दपरिपाकपरिभाषया कविप्रयुक्तशब्दस्थाने नान्यः शब्दः प्रयोज्यविषयो यदा भवति तदा तं शब्दपाक इति शब्दविदो विदन्ति। कालिदासीयशब्देषु चेयं परिभाषा सम्यग् घटत इति द्वितीये परिच्छेदे प्रतिपादितम्। यथा विष्णुपदं यत्र प्रयुक्तं तत्र विष्णुपर्यायेषु शाङ्र्गपाणिविष्वक्सेनौ हरिर्वा नैव युज्यते। विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा इत्यत्र विष्णुपदं वर्जयित्वाऽन्यत्पदं यदि प्रयुज्येत न तथार्थसङ्गतिः स्यात्। एवमेव शापान्तो मे भुजगशयनादुत्थिते शाङ्र्गपाणावित्यत्र शाङ्र्गपाणिपदे विशेषः। शिवपर्यायेषु यत्र भवपदं प्रयुक्तं तदेव समीचीनम्। यथा—अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवा इत्यत्र शिववीर्यस्यामोघामुत्पादकशक्तिं प्रकटयितुमत्र भवपदमुपात्तं कविना। 'स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः' इत्यत्र च शिवस्य कृते स्थाणुपदमेव सार्थकम्'। 'हरकोपानलभस्म केवलम्' 'हरदग्धस्य मनोभवद्रुमस्य' इत्यादिषु हरपदमेव शिवार्थे सङ्गच्छते न चात्र शिवपदं भवपदं वा युज्यते।

एवमेवाग्निपर्यायेषु जातवेदस्पदं यत्र कविः प्रयुङ्क्ते तत्र कथमन्यत्पदं युक्ततरं स्यात्। यथा हि—'रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रिया'मित्यत्र यो जातं जातं वेत्ति तस्मिन् विशुद्धायाः प्रियायाः शुद्धौ न कोऽपि संशय इति जातवेदस्पदेनैव ध्वन्यते। मेघपर्यायेषु यत्र घनपदं प्रयुक्तं तदेव युक्ततमम्, यत्र च जीमूतपदं प्रयुक्तं तदपि न परिवर्तनसहम्। स्त्रीपर्यायेषु क्वचिद् अबलापदमेवापरिहार्यमन्यत्र च दयितापदस्यैव नितान्तमौचित्यं विद्यते। वस्तुतस्तु कालिदासमते न द्वौ शब्दौ पर्यायौ। पर्यायवचनस्य परिभाषां कुर्वद्भिरप्यादेव शास्त्रभिहितम्'—के नाम पर्यायवचनाः। ये पर्यायेणार्थं ब्रुवन्ति ते पर्यायवचनाः।

निर्भिद्य विग्रहमशोकनितलिप्तपुङ्खस्तं पातयां प्रथममास पपात पश्चात् ।[1]

इत्यत्र कृञ्चानुप्रयुज्यते लिटि इति विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थ-ञ्चानुग्रहणम्[2] इति भाष्यकारवचनात् पातयामास इत्यस्य पातयां प्रथममास इति व्यवहितप्रयोगोऽपाणिनीयः। किन्तु प्रसङ्गानुकूलप्रभावोत्पादने तथा प्रयोगो नितान्तमौचित्यमावहति। पत्त्री शरः कीदृशः अशोणितलिप्तपुङ्खः स महिष-विग्रहं निर्भिद्य तं पातयां प्रथममास पश्चात् स्वयं पपात। पातयां प्रथममास इति कथनेन महिषपातने उपक्रमविशेष इवात्र सूच्यते।

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार।[3]

भ्रूभेदमात्रेण मघोनः पदात् यो नहुषं प्रभ्रंशयाञ्चकार इत्यस्य स्थाने प्रभ्रंशयां यो नहुषं चकार इति प्रयोगेण निःसंशयमधिकः प्रभ्रंशने महर्षेरग-स्त्यस्य प्रभावः सूच्यते।

संयोजयां विधिवदास समेतबन्धुः कन्यामयेन कुमुदः कुलभूषणेन।[4]

इत्यत्रापि संयोजयां विधिवदास इति प्रयोगः संयोजनकार्ये विधिवत्त्वं प्रभावयितुं कृतः। एवञ्च—

शैलाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः।[5]
तेनास लोकः पितृमान्विनेत्रा तेनैव शोकापनुदेन पुत्री।[6]

इत्यादिषु प्रसङ्गेषु अस् धातोर्लिटि तादृक् प्रयोगोऽपि अस्ते भूः इति पाणिनिसूत्रविरुद्धस्तथापि कविना काव्यरसप्रवाहे तादृशाः प्रयोगाः कृताः। नानेनैव विभाव्य यत्कविरसौ व्याकरणनियमेष्वसावधानः। संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च[7] इति वचसा स स्वयं व्याकरण-नियमान् प्रति जागरूको लक्ष्यते। किन्त्विष्टप्रभावोत्पादनार्थं काव्यप्रवाहे विहितोऽपि तादृग् दोषस्तस्य गुणसन्निपाते निमज्जति।

---

१. रघु० ९।६१
२. महाभाष्यम् ३ अ० १ पा० ३ आ० ४० सू०
३. रघु० १३।३६
४. तत्रैव १६।८६
५. कुमार० १।३५
६. रघु० १४।२३
७. कुमार० १।२८

# उपसंहारः

कालिदासकाव्ये शब्दपरिपाक इति परिच्छेदषड्कात्मकोऽयं प्रबन्धः समाप्तिं गतः। किं तावदत्र प्रतिपादितं कश्च पुनरुपलब्धय इति प्रश्ने प्रथमं त्विदमेव वक्तव्यमस्ति यद्विद्वद्भिर्यद्यावधि कालिदासस्य शब्दविन्याससौन्दर्यविषये संक्षेपेणैव यत्र तत्र निर्देशः कृतः किन्तु वामनोद्धृतशब्दपरिपाकपरिभाषया कालिदासीय-शब्दानां तथाविधविश्लेषणस्यायं प्रथमो नूतनश्च प्रयासः। वामनोद्धृतशब्द-परिपाकपरिभाषया कविप्रयुक्तशब्दस्थाने नान्यः शब्दः प्रयोज्यविषयो यदा भवति तदा तं शब्दपाक इति शब्दविदो विदन्ति। कालिदासीयशब्देषु चेयं परिभाषा सम्यग् घटत इति द्वितीये परिच्छेदे प्रतिपादितम्। यथा विष्णुपदं यत्र प्रयुक्तं तत्र विष्णुपर्यायेषु शाङ्र्गपाणिविष्वक्सेनौ हरिर्वा नैव युज्यते। विष्णो-रिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा इत्यत्र विष्णुपदं वर्जयित्वा-ऽन्यत्पदं यदि प्रयुज्येत न तथार्थसङ्गतिः स्यात्। एवमेव शापान्तो मे भुजगशय-नादुत्थिते शाङ्र्गपाणाविरत्यत्र शाङ्र्गपाणिपदे विशेषः। शिवपर्यायेषु यत्र भवपदं प्रयुक्तं तदेव समीचीनम्। यथा—शमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवा इत्यत्र शिववीर्यस्यामोघामुत्पादकशक्तिं प्रकटयितुमत्र भवपदमुपात्तं कविना। 'स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः' इत्यत्र च शिवस्य कृते स्थाणुपदमेव सार्थकम्'। 'हरकोपानलभस्म केवलम्' 'हरदग्धस्य मनोभवद्रुमस्य' इत्यादिषु हरपदमेव शिवार्थे सङ्गच्छते न चात्र शिवपदं भवपदं वा युज्यते।

एवमेवाग्निपर्यायेषु जातवेदस्पदं यत्र कविः प्रयुङ्क्ते तत्र कथमन्यत्पदं युक्ततरं स्यात्। यथा हि—'रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रिया'मित्यत्र यो जातं जातं वेत्ति तस्मिन् विशुद्धायाः प्रियायाः शुद्धौ न कोऽपि संशय इति जातवेदस्पदेनैव ध्वन्यते। मेघपर्यायेषु यत्र घनपदं प्रयुक्तं तदेव युक्ततमम्, यत्र च जीमूतपदं प्रयुक्तं तदपि न परिवर्तनसहम्। स्त्रीपर्यायेषु क्वचिद् अबलापदमेवा-परिहार्यमन्यत्र च दयितापदस्यैव नितान्तमौचित्यं विद्यते। वस्तुतस्तु कालिदास-मते न द्वौ शब्दौ पर्यायौ। पर्यायवचनस्य परिभाषां कुर्वद्भिरचार्यदेवशास्त्रि-भिरुक्तम्'—के नाम पर्यायवचनाः। ये पर्यायेणार्थं ब्रुवन्ति ते पर्यायवचनाः।

पर्यायो नाम परिपाटीक्रमः। इदमुक्तं भवति ये शब्दा असन्निपुक्ता असहोच्चारिता एकार्थस्य वाचकास्ते पर्यायवचनाः समाख्यायन्ते। इदञ्चातोऽर्थादापद्यते य एकार्थका इति कोशेषु पठिता लोके वा तथात्वेन परिगृहीतास्ते चेद्युगपद्वाक्ये प्रयुक्ता स्युर्नैकार्थकाः स्युः। अवश्य तत्र विशेषेण केनापि भवितव्यमनिर्ज्ञातेन। अर्थगत्यर्थो हि शब्दप्रयोगः। अर्थस्य चैकेन सम्प्रत्ययादितरस्य वैयर्थ्यप्रसङ्ग इति सुव्यवस्थितः पर्यायवचनाना सममप्रयोग इति। एवं—'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये' इत्यत्र हरपिनाकपाणिपदयोर्युगपत्प्रयोगेण कोशप्रतिपादित शिवपर्यायत्वं कालिदासस्य नापेक्षितम्। हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः इत्यत्र हरिपुरुषोत्तमयोः पर्यायत्वराहित्यं स्पष्टमेव। अभ्रघनौ कोशेषु मेघपर्यायत्वेन स्वीकृतौ परं 'वर्पात्ययेन रुचमभ्रघनादिवेन्दोः' इत्यस्मिन् रघुवंशीये पद्ये घनपदस्य सधातार्थं जानता कालिदासेन अन्तः सारं घन तुलयितुं नानिलः शक्ष्यति त्वाम् इत्यत्र मेघार्थे घनपद साभिप्राय प्रयुक्तम्। कवेर्यत्र तत्र शब्दानां स्वतः निर्वचनं तस्य शब्दपरिपाकमेव प्रकटयति।

निपातादछन्दःपूर्त्यै वाक्यालङ्कारे वा प्रायेण प्रयुज्यन्त इति वचः कालिदासे न सत्यम्। सार्थका एव निपातास्तेन यथास्थान प्रयुक्ता इति निपातोचित्यप्रसङ्गे विशद व्याख्यातम्। उ तु नु चेत्यादयो लघुनिपाता अपि कथमभिव्यञ्जकाः कालिदासकृतिष्विति निभालनीयमेव। अयं च निपातानां सुप्रयोगोऽपि कवेः शब्दपरिपाकः।

– उपमानोपमेययोर्लिङ्गसाम्यदर्शनमस्य कवेर्वैशिष्ट्यम्—'श्रद्धा वित्तं विधिश्चेति त्रितय तत्समागतम्'; 'ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः' अस्मान् साधु विचिन्त्य संयमधनानुच्चैःकुलं चात्मनस्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्' इत्यादिषु युगपल्लिङ्गत्रयस्य विधानं कवेः शब्दप्रयोगनैपुण्यमेव प्रत्याययति। 'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये' इत्यत्र कवेर्वागर्थशब्दयोः स्त्रीपुल्लिङ्गयोः प्रयोगे स्त्रीपुंसयोः पार्वतीपरमेश्वरयोरुपमानरूपेण प्रयोगे शब्दपरिपाक एव। पदानां विशिष्टवचनविधानमपि साभिप्रायमेव प्रतिभाति। स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु इत्यत्र बहुवचनप्रयोगो युक्तियुक्त.। विरहसन्तापवशादेकत्रास्थातुमशक्यत्वादाश्रमादाश्रमान्तर पर्यटन्नेव कालं कथञ्चिद् यापयति स्म यक्षस्तेनात्र कविना रामगिर्याश्रमेष्विति बहुवचन प्रयुक्तम्। 'मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः' इत्यत्र स्तन इत्येकवचनमेव युक्तियुक्त प्रयुक्तम्। विदग्धा नायिकाः स्तनमेकमेव दर्शयन्त्यन्यथा धाष्टर्यप्रसङ्गात्। अस्तु, तथा वचनविशेषस्य क्वचित् क्वचित् प्रयोगे कवेर्वैशिष्ट्यम्।

वैदर्भीरीतिपोषकोऽपि कविरिष्टप्रभावोत्पादनार्थं दीर्घसमासान् यदि प्रयुङ्क्ते तदप्यस्य पदविन्यासकौशलम् । 'यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाः' इत्यत्र दीर्घिकाणां विशेषणे दीर्घसमासः स्वाभाविकः । 'आवर्जितजटामौलिविलम्बिशशिकोटयः' अत्र रुद्राणां प्रभावातिशयं द्योतयितुं दीर्घसमासो युज्यते ।

एवञ्चेष्टप्रभावोत्पादनाय वाक्ये कः शब्दः प्रथमं प्रयोज्यः कश्च पश्चादित्यस्मिन्विषयेऽपि कविः सतर्को लक्ष्यते 'शशाम वृष्ट्यापि विना दवाग्निरासीद् विशेषा फलपुष्पवृद्धिः' इत्यत्र शशामेति क्रियापदस्यैव पूर्वप्रयोगेण दिलीपस्य वनप्रवेशफलं सुस्पष्टं भवति । 'सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति' इत्यत्र सदयम् इति क्रियाविशेषणपदस्यैव पूर्वप्रयोगो युज्यते । नवोढा वधूः सदयमेव भोक्तव्या नो चेत्सा उद्वेगं व्रजेदिति हेतोः 'सदयम्' इति सर्वतः प्राक् प्रयुज्य कविना नवोढोपभोगे सतर्कता ज्ञापिता । एवमेव 'इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे' इति कथनं सम्यक्तया घटत इति तथाविधसङ्केतवाचिनां सर्वनामपदानां वाक्यारम्भे प्रयोगेण लक्षितं भवति 'अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः' इति विप्रकृष्टस्य तपोवनस्यार्थे अदसो रूपम्, 'इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम्' इति सन्निकृष्टमुखार्थे इदमो रूपम् । 'एषाऽपि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्' इत्यत्र समीपतरवर्तिनीमातुरां चक्रवाकीं प्रस्यनसूयाया एतदो रूपेणैव सङ्केतो युक्तः ।

अप्रचलितेष्वसामान्येष्वर्थेषु शब्दानां प्रयोगं शब्दवित्कविः कालिदास एव कर्तुमलम् । 'रूढियोगापहारिणी'ति नियममनादृत्य रूढार्थप्रचलितान् शब्दान् यौगिकार्थे बहुशः प्रयुज्य साहसमाचरितवान् कविरयम् । यथा—अत्यन्तेतिपदमत्यधिकमिति रूढार्थे प्रचलितमपि कविना 'आस्यातमस्यै गुरुभावि दुःसमत्यन्तलुप्तप्रियदर्शनेन' इत्यत्र अतिक्रान्तोऽन्तमिति यौगिकार्थ एव प्रयुक्तम् । अत्यन्तं सततं निरन्तरं वा लुप्तं प्रियदर्शनं यस्य तेन सव्येतरेणाक्ष्णेत्यर्थः । रूढार्थपिशस्य यौगिकार्थं एवात्र सङ्कनिस्तेन कविना तथैव प्रयोगो विहितः प्रियदर्शनमत्यधिकं न किन्तु शाश्वतकालाय लुप्तमिति भावः । तथैव प्रवीणेति पदं नैपुण्यार्थे रूढं किन्तु कविरयं 'विरवावमुप्रावहैः प्रवीणैः संगीयमानत्रिपुरावदान.' इत्यत्र प्रकृत्या संसाधिता वीणास्य यद्वा प्रवीणयति वीणया प्रगायतीति प्रवीणपदस्य यौगिकार्थे प्रयोगं करोति स च प्रयोगो नितान्तमुपपन्नो गन्धर्वाणां वीणावादनप्रकर्षात् । कविना नूतनेष्वर्थेषु प्रयुक्ताः केचन शब्दाः पश्चात् लोके ते तेष्वर्थेषु गृहीताः । अत्र कोशकाराः प्रमाणम् । प्रजावती

दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव इत्यत्र प्रजावतीपदं भ्रातृजायार्थे सर्वप्रथमं कविरसौ प्रयुङ्क्ते कोशकारैश्चानन्तरमस्मिन्नेवार्थे रूढितं पदमिदम् 'प्रजावती भ्रातृजाया' इत्यमरः 'प्रजावती भ्रातृवधूः स्मृता च' इति हलायुधः। इष्टप्रभावोत्पादनार्थं कविरयं क्वचिद् व्याकरणप्रतिबद्धता नापेक्षते। तं पातयां प्रथममास पपात पश्चात् सयोजयां यो नहुष चकारेत्यादिषु प्रसङ्गेषु पातयामास संयोजयामासेत्यव्यवहितप्रयोग एव व्याकरणसम्मतः। व्यवहितप्रयोगे तु च्युतसंस्कृतिदोष दर्शयन्ति काव्यालोचकाः। केचन विद्वासश्च पातयामिति भिन्नं पदम् आसेति भिन्नमिति साधयन्ति तन्न समीक्षासहम्। कथमेतदं स्वीक्रियते यद् वागर्थप्रतिपत्तिमाप्तेनापि कविना क्वचित्क्वचिदिष्टप्रभावोत्पादनार्थं व्याकरणप्रतिबद्धताया. परित्यागः कृतः। निरङ्कुशा हि कवयः इति प्राचामुक्तिः।

अस्तु, कालिदासीयशब्दानां परिपाकदृष्ट्या मूल्याङ्कनानन्तरमसम्मतिप्रश्नोऽपि कश्चिदुत्थाप्येत यत् किं कालिदासस्य प्रत्येक पदं परिवर्तनासहं, न विद्यन्ते किं तादृशाः प्रयोगा यत्रैकस्य शब्दस्य स्थानेऽन्यः शब्दः प्रयुज्येत। एवं चेत् 'स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम्' इत्यस्मिन् मेघदूतीये पद्ये बाष्पपदस्य स्थाने तत्पर्यायोऽश्रुशब्दः किन्न प्रयोज्यो भवति। 'मोहान्मया पूर्वमपेक्षितस्ते यो बाष्पबिन्दुरधर परिबाधमानः' इत्यत्राश्रुबिन्दुरिति कथन्न युज्यते। हिरण्मयी कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः इत्यत्र सुवर्णस्य कृते हिरण्यपदं प्रयुज्याग्रिमे पद्ये तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् इत्यत्र हेमपदं कथं तस्यैव सुवर्णस्य कृते प्रयुक्तम्। उच्यते—नैतद् यत्कालिदासोऽश्रुवाष्पयोर्भेदं न जानाति। कथं हि सः 'विललाप स बाष्पगद्गद सहजामप्यपहाय धीरताम्', 'कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्' 'बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया' इत्यादिषु कण्ठरोधप्रसङ्गे बाष्पपदमेव योजयेन्नाश्रुपदम्। यद्वा—'आनन्दजः शोकजमश्रुबाष्पस्तयोरशीतं शिशिरो बिभेद' इत्यत्राश्रुबाष्पयोः सहप्रयोग भेददर्शनार्थं कथं कुर्यात्।

अश्रुबाष्पयोर्भेदप्रकाशने प्राचां प्रयोगा एवात्र शरणम्। तद्यथा—'अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः' 'बाष्पैः पिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम्' 'अश्रुपूर्णमुखी दीना बाष्पगद्गदभाषिणी'ति 'बाष्पकण्ठोऽश्रुलोचन' इति च महाभारते प्रयोगान् दृष्ट्वा स्पष्टमिदं भवति यत्प्रवाहः पातो वा अश्रुणो भवति न तु बाष्पस्य। बाष्पेण तु कण्ठरोधो जायते। भेदोऽयं कवेः कालिदासस्यापि सुविदित इति पूर्वोक्तकण्ठरोधप्रसङ्गैरुपलक्ष्यते। नेत्रजलार्थे त्वनेन कविना

प्रायेणाश्रुपदं प्रयुक्तं तद्यथा—'मुञ्चन्त्यश्रूणीव लताः' 'अश्रु च कपोलपतितं दृश्यमिदं वणिकोच्छ्वासात्' 'मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति' 'नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम्' इत्यादिषु। प्रयोगैरेभिरश्रुवाष्पयोः स्पष्टेऽपि भेदे नेत्रजलार्थं वाष्पपदप्रयोगो यदि दृश्यते कविकृतिषु तत्र परम्परैव कारणम्। वस्तुतो भाषायां परिवर्तनस्यास्मिन्नुपक्रमे शब्दानां पर्यायतास्वीकरणमपि शनैः शनैः प्राचलत्। रामायणे तावद्—'कौसल्या व्यसृजद् वाष्पं प्रणालीव नवोदकम्' 'वाष्पप्रस्रवणैर्मुखैरि'त्यादिषु वाष्पस्य स्पष्टतो नेत्रजलार्थे प्रयोगान् दृष्ट्वा कालिदासेनापि तथानुकरणं परम्परया कृतम्। हेमहिरण्यादीनां सुवर्णजातीनामपि पर्यायत्वेन प्रयोगस्यैतदेव कारणम् अन्यथा हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा इत्यत्र सुवर्णपर्यायेषु हेमपदमेव युक्तं विद्यते। स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् इत्यादीनि सुवर्णनामानि पर्यायत्वेन पठितान्यपि न पर्यायवचनानीति सुतरां सिध्यति। रामायणादिषु तेषां सहप्रयोगदर्शनात् पारिभाषिकैः टीकाकारैश्च भेदस्यापनात्। यथा हि—'सुवर्णेन हिरण्येन किं करिष्यावहे वने' इत्यत्र सुवर्णेन सुवर्णरूपेण हिरण्येन द्रव्येणेत्यर्थः इति रामायणे तिलकटीकायां रामः। माल्यदामदीपहिरण्यहेमरजतादि समासोक्त्या पठिते चरकवचने टीकाकारेण चक्रपाणिना हिरण्यशब्देनाघटितं हेम गृह्यते, हेमशब्देन च घटितमिति हेमहिरण्ययोर्भेदो व्याख्यातः। अनेनैतत्स्पष्टं यत् सुवर्णहेमहिरण्यकाञ्चनकार्तस्वरजाम्बूनदादयो न पर्याया अपि तु जातिविशेषाः। कालिदासेन चैतासां जातीनां यथास्थानं प्रयोगो विहितः। प्रकृते तु यथा घटितसुवर्णहेतोर्हेमपदप्रयोगः। श्यामिकामिश्रणं विना न सुवर्णं घटयितुं शक्यते। मिश्रितायां च श्यामिकायां तद् घटितं स्वर्णं हेम उच्यते। तादृशस्य हेम्न एव विशुद्धेः श्यामिकाया वा परीक्षाप्रश्नः। तथापि कविना हेमकुम्भकाञ्चनकुम्भहिरण्यकुम्भादीन् प्रयुज्य कृत्वा तेषां पर्यायत्वं दर्शितम्। अत्र पर्यायताक्रमस्य शनैः शनैः प्रसिद्धिरेव कारणम्।

अपारः खलु कालिदासस्य शब्दनिधिः। तस्य कृतयः प्रायेण शब्दपरिपाकगुणालङ्कृताः सहृदयहृदयान्यावर्जयन्तीति नातिचित्रम्। क्व कालिदासकाव्यं क्व च मेऽल्पविषया मतिरिति सम्यक्तया जानतोऽपि ममायमुडुपेन सागरं तितीर्षोरिवास्ति प्रयास इति मत्वा मामर्थविदो धाष्ट्र्यमिदं क्षन्तुमर्हाः। कालिदासकाव्यरसपिपासूनां काव्यमर्मज्ञानां कृते किञ्चिदप्युपयोगित्वमस्मिन् ग्रन्थे स्यात्तदैवात्मानं कृतकृत्यमाकलयिष्यामीति शम्।

# ग्रन्थसूची


(१) आधारग्रन्थाः

कालिदास-ग्रन्थावली — सीतारामचतुर्वेदिसम्पादिता, भारतप्रकाशनमन्दिर, अलीगढ, २०१९ वि०

रघुवंशम् — मल्लिनाथ-वल्लभ-हेमाद्रि-दिनकरमिश्र-चारित्रवर्धन-सुमतिविजयादिटीकाविशिष्टांशैर्युतम् (हरिदामोदरवेलकरसम्पादितम्) निर्णयसागरप्रेस, बम्बई, १९४८

गोपालरघुनाथनन्दर्गीकरसम्पादितम् (चतुर्थसंस्करणम्), मोतीलाल बनारसीदास, दिल्ली १९७१

कुमारसम्भवम् — मल्लिनाथ-भरतमल्लिक - नारायणनाथटीकायुतम् (रामधनकाव्यतीर्थसम्पादितम्) कलकत्ता संस्कृत सीरीज नं० १३, मैट्रोपोलिटन प्रिंटिंग एण्ड पब्लिशिंग हाउस, कलकत्ता, १९३५

मो०रा० कालेसम्पादितम्, मोतीलाल बनारसीदास, दिल्ली, १९६७

मेघदूतम् — वल्लभटीकायुतम् (हुल्शसम्पादितम्) बङ्गाल एशियाटिक सोसायटी, कलकत्ता, १९११

मल्लिनाथटीकायुतम् (मो० रा० कालेसम्पादितम् षोडशसंस्करणम्), बुकसेलर्स पब्लिशिंग कं, महेण्डले बिल्डिंग, बम्बई, १९५९

भरतमल्लिकटीकायुतम् (जतीन्द्रविमलचौधुरीसम्पादितम्), प्राच्यवाणीमन्दिर, कलकत्ता १९५०

काशिनाथबापूपाठकसम्पादितम्, ओरियण्टल बुक सप्लाइंग एजेन्सी पूना, १९१६

लालरमायदुपालसिंहसम्पादितम्, लोकभारतीप्रकाशन, इलाहाबाद, १९६५

| | |
|---|---|
| | उत्तरमेघः सारोद्धारिणीसनाथः संस्कृतसाहित्यपरिषद्, प्रति० १५-१६ १९३२-३४ |
| ऋतुसंहारम् | मणिरामकृतया चन्द्रिकाटीकया समेतम् (आचार्यनारायणरामसंशोधितम्) निर्णयसागरप्रेस, बम्बई, १९५२ |
| अभिज्ञानशाकुन्तलम् | राघवभट्टटीकायुतम् (मो० रा० कालेसम्पादितम्) बुकसेलर्ज पब्लिशिंग क० बम्बई, १९५७ |
| | रमेन्द्रमोहनवसुकृतया कुमारसन्तोषिणीटीकया युतम्, मॉडर्न बुक एजेन्सी प्रा० लि०, कलकत्ता, १९७० |
| विक्रमोर्वशीयम् | मयूरेश्वरकृतयार्थप्रकाशिकयोद्भासितम् (मो० रा० काले सम्पादितं तृतीयं संस्करणम्) सुधाकर मुद्रायन्त्रालयः, बम्बई, १९१२ |
| | रङ्गनाथकृता प्रकाशिका कोणेश्वरकृता कोणेश्वरी काटयवेमकृता कुमारगिरिराजीया इति टीकात्रयोपेतम्, संस्कृत अकादमी, उस्मानिया विश्वविद्यालय, हैदराबाद, १९६६ |
| मालविकाग्निमित्रम् | काटयवेमटीकायुतम् (शेषाद्रिशास्त्र्यरसम्पादितम्) ज्ञानप्रकाशमुद्रणालयः, १८९६ |

(२) मूलसंस्कृतग्रन्थाः

| | |
|---|---|
| अष्टाध्यायी | बालमनोरमा मुद्रणालय, मैलापुर, मद्रास, १९३७ |
| ऋग्वेदानुक्रमणी | कुन्हनराजासम्पादितम्, मद्रासविश्वविद्यालयग्रन्थमाला, १९३२ |
| औचित्यविचारचर्चा | मनोहरलालगौडसम्पादिता, भारतप्रकाशनमन्दिर, अलीगढ |
| कथासरित्सागरः | मोतीलाल बनारसीदास, दिल्ली, १९७० |
| काव्यप्रकाशः | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९५१ |
| काव्यमीमांसा | बिहारराष्ट्रभाषापरिषद्, पटना, १९५४ |
| काव्यादर्शः | चौखम्बाविद्याभवन, वाराणसी, १९५८ |
| काव्यालङ्कारः | सत्यदेव चौधरी सम्पादितः, वासुदेवप्रकाशन, दिल्ली, १९६५ |

| | |
|---|---|
| उपाध्याय, भगवतशरण | कालिदासं नमामि, रणजीत प्रिंटर्स एण्ड पब्लिशर्स, दिल्ली, १९६६ |
| द्विवेदी, हजारी प्रसाद | मेघदूत—एक पुरानी कहानी, हिन्दी ग्रन्थ रत्नाकर प्रा० लि०, बम्बई, १९५७ |
| | कालिदास की लालित्ययोजना, नैवेद्य निकेतन, वाराणसी, १९६५ |
| पोद्दार, कन्हैयालाल | हिन्दी मेघदूत विमर्श, इण्डियन प्रेस (पब्लिकेशन्स) प्रा० लि०, इलाहाबाद, १९५८ |
| मिराशी, वासुदेव विष्णु | कालिदास, हिन्दी ग्रन्थरत्नाकर, प्रा० लि० बम्बई, १ ५६ |
| रञ्जनसूरिदेव | मेघदूत—एक अनुचिन्तन, नागरी प्रकाशन प्रा० लि०, पटना, १९६० |
| विद्यालङ्कार, वागीश्वर | कालिदास और उसकी काव्यकला, मोतीलाल बनारसीदास, दिल्ली, १९६३ |
| शास्त्री, मङ्गलदेव | संस्कृत साहित्य का इतिहास (अनुवाद), मूललेखक —ए० बी० कीथ, मोतीलाल बनारसीदास, दिल्ली १९६० |
| शास्त्री, शिवनारायण | निरुक्तमीमांसा, इण्डोलोजिकल बुक हाउस, दिल्ली २०२६ वि० |

### (4) ENGLISH WORKS

| | |
|---|---|
| Bhandare, L.S. | Imagery of Kalidasa, Popular Prakashan, Bombay, 1968 |
| C. Kunhan Raja | Kalidasa, Andhra University, Waltair, 1956 |
| Dwivedi R.C. | *Principals of Literary Criticism in Sanskrit*, Motilal Banarsi Das, Delhi 1969 |
| Hillebrandt Alfred | Kalidasa – An Estimate of his Literary Merit, Translated from German by Dr. S.N. Ghoshal, World Press Private Ltd., Calcutta, 1971 |
| Kalla, Laxmidhar | Birth Place of Kalidasa, Delhi University Publications, No. 1, 1956 |
| Karmarkar, R.D. | Kalidasa, Karnatak University, Dharwar 1960 |

काव्यालङ्कारसूत्रम् हिन्दी अनुसन्धान परिषद्, दिल्लीविश्वविद्यालय-ग्रन्थमाला, १९५४
गाथासप्तशती जगन्नाथपाठकसम्पादिता, चौखम्बा संस्कृत सीरीज आफिस वाराणसी, १९६९
देवीभागवतपुराणम् पण्डितपुस्तकालय, काशी १९५६
ध्वन्यालोकः आचार्यविश्वेश्वरसम्पादितः ज्ञानमण्डल लिमिटेड, वाराणसी, १ ६२
निरुक्तम् छज्जूरामशास्त्रिसम्पादितम्, मेहरचन्द लक्ष्मणदास, दिल्ली, १९६३
नैषधीयचरितम् निर्णयसागरप्रेस, बम्बई, १९५२
बृहद्देवता चौखम्बा संस्कृत सीरीज; वाराणसी, १९६३
भगवद्गीता गीता प्रेस, गोरखपुर,
भागवतपुराणम् नित्यानन्दब्रह्मचारिसम्पादितम्, वृन्दावन, १९६०
भोजप्रबन्धः निर्णयसागरप्रेस, बम्बई, १९२८
महाभारतम् भण्डारकर ओरियण्टल रिसर्च इस्टीट्यूट, पूना
नीलकण्ठटीकासमेतम्, चित्रशालाप्रेस, पूना, १९२९
महाभाष्यम् हरियाणा साहित्य संस्थान, गुरुकुलझज्जर, १९६३
रसगङ्गाधरः निर्णयसागरप्रेस, बम्बई, १९१६
रामायणम् तिलकटीकायुतम्, निर्णयसागरप्रेस, बम्बई १९१५
वक्रोक्तिजीवितम् राधेश्यामभिश्रसम्पादितम्, चौखम्बासंस्कृतसीरीज, आफिस, वाराणसी, १९६७
विष्णुपुराणम् संस्कृतिसंस्थान, बरेली, १९६७
शिशुपालवधम् हरगोविन्दशास्त्रिसम्पादितम्, चौखम्बा विद्याभवन वाराणसी, १९५५
साहित्यदर्पणः चौखम्बासंस्कृतसीरीज आफिस, वाराणसी, १९५५
सूक्तिमुक्तावलिः गायकवाड ओरियण्टल सीरीज, १९३८
हर्षचरितम् चौखम्बा विद्याभवन, वाराणसी, १९५८

(३) आधुनिकग्रन्थाः
उपाध्याय, बलदेव संस्कृत वाङ्मय, शारदा मन्दिर, वाराणसी, १९६६

| | |
|---|---|
| उपाध्याय, भगवतशरण | कालिदासं नमामि, रणजीत प्रिंटर्स एण्ड पब्लिशर्स, दिल्ली, १९६६ |
| द्विवेदी, हजारी प्रसाद | मेघदूत—एक पुरानी कहानी, हिन्दी ग्रन्थ रत्नाकर प्रा० लि०, बम्बई, १९५७ |
| | कालिदास की लालित्ययोजना, नैवेद्य निकेतन, वाराणसी, १९६५ |
| पोद्दार, कन्हैयालाल | हिन्दी मेघदूत विमर्श, इन्डियन प्रेस (पब्लिकेशन्स) प्रा० लि०, इलाहाबाद, १९५८ |
| मिराशी, वासुदेव विष्णु | कालिदास, हिन्दी ग्रन्थरत्नाकर, प्रा० लि० बम्बई, १ ५६ |
| रञ्जनसूरिदेव | मेघदूत—एक अनुचिन्तन, भारती प्रकाशन प्रा० लि०, पटना, १९६० |
| विद्यालङ्कार, वागीश्वर | कालिदास और उसकी काव्यकला, मोतीलाल बनारसीदास, दिल्ली, १९६३ |
| शास्त्री, मङ्गलदेव | संस्कृत साहित्य का इतिहास (अनुवाद), मूललेखक —ए० बी० कीथ, मोतीलाल बनारसीदास, दिल्ली १९६० |
| शास्त्री, शिवनारायण | निरुक्तमीमांसा, इण्डोलोजिकल बुक हाउस, दिल्ली २०२६ वि० |

(4) ENGLISH WORKS

| | |
|---|---|
| Bhandare, L.S. | Imagery of Kalidasa, Popular Prakashan, Bombay, 1968 |
| C. Kunhan Raja | Kalidasa, Andhra University, Waltair, 1956 |
| Dwivedi R.C. | Principals of Literary Criticism in Sanskrit, Motilal Banarsi Das, Delhi 1969 |
| Hillebrandt Alfred | Kalidasa – An Estimate of his Literary Merit, Translated from German by Dr. S.N. Ghoshal, World Press Private Ltd., Calcutta, 1971 |
| Kalla, Laxmidhar | Birth Place of Kalidasa, Delhi University Publications, No. 1, 1956 |
| Karmarkar, R.D. | Kalidasa, Karnatak University, Dharwar 1960 |

Longinus — *On the Sublime, tr. from Greek* by T.S. Dorsch, Penguin Book Ltd., England, 1970

Macdonell, A A — *A History of Sanskrit Literature* (3rd Ed.), Munshi Ram Manohar Lal, Delhi 1958

Panda Pitambar — *Kalidasa in his own words*, Town Press Balasore, 1960

Pope Alexander — An Essay on Criticism, ed. by Walter Jackson Bate Harcourt, Brace & World Inc. 1952

D. Sharma — An Interpretative Study of Kalidasa, M/S Sumudran, Calcutta, 1968

Shastri Satya Vrat — The Ramāyana—A Linguistic Study, Munshi Rām Manohar Lal, Nai Sarak, Delhi, 1964

(५) शोध-निबन्धाः

अम्बिकाप्रसाद उपाध्याय — कालिदास के शब्द-प्रयोग, समीक्षा निबन्ध, कालिदास ग्रन्थावली, भारतप्रकाशन मन्दिर, अलीगढ, २०१६ वि०

करुणाकुमारशास्त्री — कालिदासीयकुमारसम्भवम्, संस्कृतसाहित्यपरिषद्, कलकत्ता
*Vol. XXXIII/No.8/ Dec. 1950*

चारुदेवशास्त्री — पर्यायवचनविवेकः
Proceedings and Transactions of The A.I.O.C (*Sixteenth Session*), *University* of Lucknow Vol. II, Oct. 1951

द्विवेदी, हरिहरनिवास — वैक्रम अनुश्रुति, विक्रम स्मृतिग्रन्थ २००१ वि०

राजपुरोहित, भगवतीलाल — कालिदास के निर्वचन,
The Vikram, *Journal of Vikram University*, Vol. X, 1967

Bhattacharya, Ram Shankar — Senses of 'च', Poona Orientalist Vol. XVIII, Jan-Oct. 1953

Chowdhury, Tarapada — Linguistic Abberations in Kālidāsa's Writings, Journal of the Bihar Research

| | |
|---|---|
| | Society, Vol. XXXVI, Parts 3-4, Patna, 1951 |
| Mirashi, V.V | The Rāṣṭrakūṭas of Kuntal and the date of Kālidāsa, Extension Lecture Seriess Shri Lal Bahadur Shastri Sanskrit Vidyapeeth, Delhi |
| Sharma, E.R Srikrishna | Etymologies offered by Kālidāsa to his own words, Kālidāsa Samīkṣā, Sri Venkateshwar University, Tirupati, 1962 |
| Shastri, Satya Vrat | Synonyms in the Bhāgavatapurāṇa, Annals B.O.R.I Vol, LI, 1971 |

(६) कोशग्रन्थाः

| | |
|---|---|
| अनेकार्थसङ्ग्रहः | चौखम्बा संस्कृत सीरीज वाराणसी, १९६९ |
| अमरकोशः | रामाश्रमीव्याख्यायुतः चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १९७० |
| मेदिनीकोशः | चौखम्बा संस्कृतसीरीज आफिस, वाराणसी १९६८ |
| वाङ्मयार्णवः | ज्ञानमण्डल लिमिटेड, वाराणसी, २०२४ वि० |
| शब्दकल्पद्रुमः | मोतीलाल बनारसीदास, दिल्ली, १९६१ |
| शब्दस्तोममहानिधिः | चौखम्बा प्रकाशन, वाराणसी, १९६७ |
| हलायुधकोशः | हिन्दी समिति सूचना विभाग उत्तरप्रदेश, लखनऊ, १९६७ |
| Anundoram Barooh | Nanartha Sangraha, Publication Board, Assam Gauhati, 1969 |
| Apte, V.M | Sanskrit English Dictionary, Prasad Prakashan, Poona, 1959 |
| Banerjee, Suresh Chandra | Kalidasa Kośa, Chowkhamba Sanskrit Series office, Varanasi, 1968 |
| Monier Williams | Sanskrit English Dictionary, Oxford University Press, 1956 |

# शब्दानुक्रमणिका

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | ५ | मथिलः | मैथिलः |
| २२ | ७ | मघोन्: | मघोनः |
| २३ | १७ | शार्ङ्गिपाणि | शार्ङ्गपाणि |
| ३१ | ६ | हरिस्तस्मिनक्षणे | हरस्तस्मिन् क्षणे |
| ३३ | २२ | विचारचर्यां | विचारचर्यायां |
| ३४ | १० | वेप | वेप |
| ४३ | १८ | पर्यायेव | पर्ययेव |
| ६२ | १५ | सम्यगुदन्ति | सम्यगुन्दन्ति |
| ६५ | १५ | विदधाति | विदधाति |
| ७० | १२ | वृद्धः | वृक्षः |
| ७६ | १० | सशरीस्तैव | सशरीरस्यैव |
| ८८ | ७ | दानगतिरक्षश | दानगतिरक्षण |
| ८९ | २१ | यत्रोपधयो | यत्रोपधयो |
| ९० | १० | नितान्तघननील | नितान्तघननील |
| ९३ | १४ | उपादे यैर्भवत्येव | उपदेयैर्भवत्येव |
| १०५ | ११ | भूपरवाहं | भूपरवाह |
| ११४ | १० | समुपल्लवयो | समुद्रपल्वलयो |
| पा० टि० | | ३. माल० १।१२।१६ | ३. माल० १।१२।१० |
| १५७ | १६ | विधाय | निधाय |
| १६३ | ६ | पङ्क्त्यस्य | पङ्क्तयस्च |
| १८६ | १५ | प्रत्युत्पन्नयोगस्य विषयम् | प्रत्युत्पन्नवियोगस्य मयम् |